G. 2. 11. 0
B. 2. 14. 59
L. 2. 15. 0

यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः ।
तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥ २०
सुमन्त्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् ।
स मन्यमानः कल्याणं हृदयेन ननन्द च ॥ २१
सुमन्त्रश्चिन्तयामास त्वरितं चोदितस्तया ।
व्यक्तं रामोऽभिषेकार्थमिहायास्यति धर्मवित् ॥ २२
इति सूतो मतिं कृत्वा हर्षेण महता पुनः ।
निर्जगाम महातेजा राघवस्य दिदृक्षया ॥ २३
ततः पुरस्तात्सहसा विनिर्गतो
महीपतीन्द्वारगतान्विलोकयन् ।
ददर्श पौरान्विविधान्महाधना-
नुपस्थितान्द्वारमुपेत्य विष्ठितान् ॥ २४

इति श्रीरामायणे अयोध्याकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

सू(D5 भू)तः किंचिद् (for तस्माद्देशाद्). Ñ2 V1 B D6 अपागमत्; T3 अपाक्रमात्; G1 अप°.

20 Ś1 Ñ V1 B D1.2.6 M4 om. 20–23. D4.5.7 read 20 after l. 12 of 239*.—a) Dg1 G1.3 M3 Cg.k.t दैन्यं (for दैन्यान्).—c) D5.7 ततः. D6 मंत्रज्ञं.—d) G2 हा (for ह). D4.5.7 वाक्यमब्रवीत्.—After 20, Dg1 Dt1 Dd1 Dm1 D4.5.7 (D4.5.7 l. 1–3 only) T G M1.2 ins.:

253* सुमन्त्र राजा रजनीं रामहर्षसमुत्सुकः ।
प्रजागरपरिश्रान्तो निद्राया वशमागतः ।
तद्गच्छ त्वरितं सूत राजपुत्रं यशस्विनम् ।
राममानय भद्रं ते नात्र कार्या विचारणा ।

[(l. 2) Dd1 निद्रया; D4.5.7 स्वप्नस्य (for निद्राया). G1.2 M1 एयिवान् (for आगतः). Dg1 Dt1 निद्रावशमुपागतः (for the post. half).—(l. 3) G2 M1 त्वरित(G2 °*)सू. D4.5.7 स राजवचनात्सूत गच्छ त्वं राममानय.—After l. 3, D4.5.7 ins. 249*.]

—Thereafter Dg1 Dt1 Dd1 Dm1 cont.:

254* अश्रुत्वा राजवचनं कथं गच्छामि भामिनि ।
तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत् ।

[Dg1 reads line 1 in marg.—(l. 1) Dg1 भाविनि.—(l. 2) Dg1 वचनम् (for मन्त्रिणम्).]

21 Ś1 Ñ V1 B D1.2.6 M4 om. 21 (cf. v.l. 20). D4.5.7 om. 21–23. T G M1.2 om. 21ab.—d) Dt1 *नंद; Dm1 प्रनंद (for ननन्द).—After 21, Dg1 Dt1 Dd1 Dm1 T G M1.2 ins.:

255* निर्जगाम च संप्रीत्या त्वरितो राजशासनात् ।

[Dt1 सुप्रीत्या; Dd1 Dm1 G1 स प्री° (for संप्रीत्या).]

22 Ś1 Ñ V1 B D1.2.4–7 M4 om. 22 (for D4.5.7 cf. v.l. 21 and for the rest cf. v.l. 20).—b) Dg1 G1.3 M3 त्वरितश्; G2 त्वरित (sic). Dm1 तथा; T2 त्वया (sic) (for तया).—c) Dt1 रामाभिषेकार्थे; Dd1 Dm1 (after corr.) T2.3 M1.2 रामा(M2 °म [sic])भिषेकार्थम्.—d) Dg1 Dd1 Dm1 [आ]यस्यति (sic). Dg1 Dt1 धर्मराट्; Dd1 Dm1 T3 G1.2 M1 °भाक्; M3 धार्मिकः (for °वित्).

23 Ś1 Ñ V1 B D1.2.4–7 M4 om. 23 (for D4.5.7 cf. v.l. 21 and for the rest cf. v.l. 20).—a) G3 मतं (for मतिं).—b) Dg1 Dd1 Dm1 T G M1.2 वृतः (for पुनः).—c) Dg1 T3 G2.3 M1 महाबाहू; T1 °वेगात्; T2 G1 M2 °बाहो (for महातेजा).—d) Dd1 दि*क्षया (for दिदृक्षया).—After 23, Dg1 Dt1 Dd1 Dm1 T G M1.2 ins.:

256* सागरह्रदसंकाशात्सुमन्त्रोऽन्तःपुराच्छुभात् ।
निष्क्रम्य जनसंबाधं ददर्श द्वारमग्रतः ।

[(l. 1) T3 -हृदयसंकाशात् (hypm.).—Dt1 Dd1 om. l. 2.—(l. 2) Dm1 [आ]श्चर्यम् (for द्वारम्). G1.2 M1 आगतः.]

24 Dm1 begins with राम.—a) Dg1 Dt1 Dd1 Dm1 G1.2 M1 विनिःसृतो. Ś1 D4–7 ततः सुमंत्रः प्रययौ रथेन; Ñ V1 B D1.2 M4 ततः सुमंत्रस्त्वरितो विनिर्ययौ.—b) Ś1 Ñ1 Dt1 Dd1 Dm1 D4–7 T2 महीपतेर्; V1 B2.4 D2 G1 M4 °पतिं; T3 °भृतो (for महीपतीन्). V1 B2.3 (also रामगतिं).4 Dg1 Dm1 T G M1.2 द्वारगतो; M4 °गतं (for द्वारगतान्). Ś1 D4–7 द्वारमतीत्य सत्वरः; Ñ B1 द्वारगतोवलोकयन्.—c) T3 पाराद् (for पौरान्). Dd1 Dm1 T G3 महाजनान्; M2 उपस्थितान् (for महाधनान्).—d) M2 महीसुरान् (for उपस्थितान्). Dg1 G2 M1 निष्ठितान्.—For 24cd, Ś1 Ñ V1 B D1.2.4–7 M4 subst.:

257* विनिर्गतश्चापि ददर्श धिष्ठिता-
नुपागतान्मन्त्रिपुरोहितांस्तदा ।

[(l. 1) V1 B3.4 M4 विष्ठि(B3 [m. also] °श्रु)तान्.—(l. 2) Ś1 D6 अ(D6 उ)पावृतान्; Ñ1 अपुरोगमां; B3 उप° (for उपागतान्). Ñ2 तथा (for तदा).]

Colophon.—*Sarga name*: Ñ V1 B कैकेय्युपालंभः; D1 कैकेयीप्रत्युपाल(लं)भो; D2 कैकेयीप्रत्यलंभो; D4–7 सुमंत्रवाक्यं.—*Sarga no.* (figures, words or both): Ñ1 B1.2.4 om. Ś1 15; Ñ2 B3 10; V1 11; Dg1 Dt1 Dd1 Dm1 D2.6 S (except M3.4) 14; D1 67; D4.7 17; D5 20.—After colophon, D6 G conclude with श्री(D6 *) रामाय नमः; T2 M1 श्रीरामचन्द्राय नमः.

# १३

ते तु तां रजनीमुष्य ब्राह्मणा वेदपारगाः ।
उपतस्थुरुपस्थानं सह राजपुरोहिताः ॥ १
अमात्या बलमुख्याश्च मुख्या ये निगमस्य च ।
राघवस्याभिषेकार्थे प्रीयमाणास्तु संगताः ॥ २
उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि ।
अभिषेकाय रामस्य द्विजेन्द्रैरुपकल्पितम् ॥ ३
काञ्चना जलकुम्भाश्च भद्रपीठं स्वलंकृतम् ।
रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा ॥ ४
गङ्गायमुनयोः पुण्यात्संगमादाहृतं जलम् ।
याश्चान्याः सरितः पुण्या ह्रदाः कूपाः सरांसि च ॥ ५
प्राग्वाहाश्चोर्ध्ववाहाश्च तिर्यग्वाहाः समाहिताः ।
ताभ्यश्चैवाहृतं तोयं समुद्रेभ्यश्च सर्वशः ॥ ६

G. 2. 12. 6
B. 2. 15. 7
L. 2. 16. 4

## 13

☞ D3 missing Sarga 13 ( cf. v.l. 2. 12. 12 ). M3 missing up to संप्रसु in 21$^{a}$ ( cf. v.l. 2. 12. 17 ).

1 Dg1 om. 1$^{cd}$.

2 $^{a}$) G3 अमात्य-. —$^{b}$) M2 वै ( for ये ). —$^{d}$) Dd1 प्रयमाणाः ( sic ); Dm1 श्रीयमाणाः; G2 प्रीयप्राणास् ; G3 M2 प्रियमाणास् ( for प्री° ). Dt1 Dd1 Dm1 सुसंगताः. —For 1-2, Ñ V1 B D1.2 M4 subst. :

258* अथ तां रात्रिमुषिताः प्रधाना नृपमन्त्रिणः ।
पौरजानपदाश्चैव पुरोहितपुरोगमाः ।
राजोपस्थानमागत्य राजसंदर्शनार्थिनः ।
आभिषेचनिकं सर्वं कृत्वा तस्थुर्नृपाज्ञया ।

[ D2 om. l. 1. —( l. 1 ) M4 रजनीं व्युष्टां ( for रात्रिमुषिताः ). D1 अथ प्रभाते विमले ( for the prior half ). B1 प्रभातां; D1 संप्राप्ता ( for प्रधाना ). —( l. 2 ) M4 [ अ ]पि ( for [ ए ]व ). —( l. 3 ) M4 राज्ञोपस्थानम्. B2.4 आसाद्य; D1.2 M4 आगम्य ( for आगत्य ). —B4 om. ( hapl. ) from l. 4 up to line 1 of 260*. —( l. 4 ) B1 ( before corr. ) D1.2 अभिषेचन ( B1 °नि )कं. V1 पूर्वं; B2 द्रव्यं; D1 M4 सज्जं; D2 द्रष्टुं ( for सर्वं ). B1 ते तन् ( for तस्थुर् ). ]

3 $^{ab}$) M2 सू*****गते ( damaged ). T3 [ अ ]भ्युदिते; Cm as in text ( for [ अ ]भ्यागते ). —After 3$^{ab}$, Dg1 Dt1 Dd1 Dm1 G1 Cm.t ins. :

259* लग्ने कर्कटके प्राप्ते जन्म रामस्य च स्थिते ।

[ G1 जन्म- ( for प्राप्ते ). G1 -नाम्नस्तु समुपस्थिते ( for the post. half ). ]

—$^{d}$) T3 द्विजैश्च परिकल्पितं.

—For 3, Ñ V1 B D1.2 M4 subst. :

260* तस्मिन्नहनि पुष्येण सोमे योगमुपागते ।
आभिषेचनिकं द्रव्यं रामार्थमुपकल्पितम् ।

[ B4 om. l. 1 ( cf. v.l. 2 ). —( l. 1 ) D1.2 पुण्ये च ( for पुष्येण ). D2 समे ( for सोमे ). Ñ अपागते ( for उपागते ). —( l. 2 ) D1.2 अभिषेचनि( D1 °न )कं. ]

4 $^{ab}$) Dd1 Dm1 कांचनाञ्जलकुंभांश्च; G2 कांचनांकुरकुंभाश्च ( for $^{a}$ ). Dg1 भद्रपीठ-. Ñ V1 B D1.2 M4 शातकुं ( D1 °कौं; D2 °को )भं च रुचिरं भद्रासनमलंकृतं. —$^{cd}$) Dg1 आकीर्णो ( for आस्ती° ). Ñ V1 B D1 M4 उपकल्पितमास्तीर्यं( Ñ2 B3 °र्णं; V1 °र्यै ) मृगराजस्य चर्मणा; D1 ( gloss ) मृगाधिपचर्मणा अन्यैश्च परिपूजितं; D2 तस्योपरि समाच्छन्नं मृगाधिपतिचर्मणा. —For 1-4, Ś1 D4-7 subst. :

261* ततस्ते मन्त्रिणः सूतं सुमन्त्रं सपुरोहिताः ।
ऊचुरभ्यागतानस्मात्राज्ञ आवेदयस्व ह ।
पश्यामो न च राजानमुदितश्च दिवाकरः ।
आभिषेचनिकं सर्वं द्रव्यमेवोपकल्पितम् ।
औदुम्बरं भद्रपीठं शातकौम्भविभूषितम् । [ 5 ]

[ ( l. 1 ) D4 मंत्रिणं. —( l. 2 ) D5 राज्ञे ( with hiatus ). D7 राज्ञश्चावेदयस्व ह ( for the post. half ). —For l. 3 Cf. 14$^{ab}$. —( l. 4 ) D4.6.7 अभिषेचनि( D6 [ before corr. ] °न )कं. D4.5.7 द्रव्यं सर्वम् ( by transp. ); D6 ( before corr. ) सर्वं भद्रम् ( for सर्वं द्रव्यम् ). D4 [ उ ]पकल्पिते. —( l. 5 ) Cf. line 21 of App. I ( No. 10 ). D6 औदुंभरं. D5 -कुंभ- ( for -कौम्भ- ). ]

5 $^{a}$) Ś1 Ñ V1 B1.3.4 D1.2.4-7 M4 चैव; B2 चापि ( for पुण्यात् ). —$^{b}$) Ś1 D4.6.7 पयः ( for जलम् ). G1 repeats 5$^{ab}$ consecutively. —$^{c}$) M2 सर्वा ( for पुण्या ). —$^{d}$) Ś1 Ñ V1 B D1.2.4-7 M4 ताभ्यश्च जलमाहृतं. —After 5, D6 ins. 263*.

6 D6 om. 6. Ś1 D4.5.7 om. 6$^{ab}$. T1.2 G1.2 transp. 6 and 7$^{ab}$. —$^{a}$) Dt1 प्राग्वहाश्. G2 [ ऊ ]र्ध्वहाराश् ( for [ ऊ ]र्ध्ववाहाश् ). —$^{b}$) Dt1 च क्षीरिणः ( for समाहिताः ). —For 6, Ñ V1 B D1.2 M4 subst.; Ś1 D4.5.7 subst. l. 2 only for 6$^{cd}$ :

262* पूर्वपश्चान्मुखीभ्यश्च तिर्यगाभ्यश्च सर्वशः ।
समुद्रेभ्यश्च सर्वेभ्यः सलिलं समुपाहृतम् ।

[ ( l. 1 ) M4 ****न्मुखीभ्यश्च ( damaged ). Ñ1 तिर्यग्वाभ्यश्च ( sic ); B1 तिर्यग्गेभ्यश्च; D2 तिर्यगाभ्य*. —( l. 2 ) Ñ2 समुपाकृतं; B1 D4.5.7 M4 समुदाहृतं. ]

—Ś1 D4.5.7 cont.; D6 ins. after 5 :

G. 2. 12. 0
B. 2. 15. 7
L. 2. 16. 0

क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ।
सलाजाः क्षीरिभिश्छन्ना घटाः काञ्चनराजताः ।
पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा ॥ ७
चन्द्रांशुविकचप्रख्यं पाण्डुरं रत्नभूषितम् ।
सज्जं तिष्ठति रामस्य वालव्यजनमुत्तमम् ॥ ८
चन्द्रमण्डलसंकाशमातपत्रं च पाण्डुरम् ।
सज्जं द्युतिकरं श्रीमदभिषेकपुरस्कृतम् ॥ ९
पाण्डुरश्च वृषः सज्जः पाण्डुराश्वश्च सुस्थितः ।
प्रस्रुतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते ॥ १०

---

263* सर्वबीजानि गन्धाश्च रत्नानि विविधानि च ।
वाहनं नरसंयुक्तं दर्भाः सुमनसः प्रियाः ।
अहतानि च वासांसि भृङ्गारं च हिरण्मयम् ।

[See lines 22, 26, and 27 of App. I (No. 10). (l. 1) Ś1 गंधश्. —(l. 2) D5 रथसंयुक्तं. Ś1 दर्भान्. D5 पयः.]

7 T1.2 G1.2 transp. 6 and $7^{ab}$. —$^{a}$) G1 क्षुद्रं; M2 कृतं (for घृतं). —After $7^{ab}$, Dt1 Dd1 Dm1 T2.3 G (T3 G3 after $7^{ef}$) M1 ins. :

264* अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः ।

[See line 24 of App. I (No. 10). T3 अष्टौ सुरुचिराः कन्या (for the prior half).]

—T3 cont.; Dm1 and M2 ins. l. 1 only after $7^{ef}$ and 10 respy.; while Dg1 T1.2 G3 M1 ins. after 11 :

265* वेश्याश्चैव शुभाचाराः सर्वाभरणभूषिताः ।
लीलावत्यः सुभ्रुवश्च लोलनेत्राः सहस्रशः ।

[Cg comm. on l. 1 only. —(l. 1) Dg1 M2 शुभाकाराः.]

—$^{c}$) Dt1 Dd1 Dm1 T2.3 G1.3 (before corr. as in text) M2 सजलाः; Cg as in text (for सलाजाः). Dm1 छिन्ना (for छन्ना). —$^{d}$) T2 घंटाः. G2 -लाजताः (for -राजताः). —For 7, Ś1 Ñ V1 B D1.2.4–7 M4 subst. :

266* क्षीरवृक्षप्रवालैश्च पद्मोत्पलविमिश्रितैः ।
पूर्णकुम्भा अलंकृत्य काञ्चना उपकल्पिताः ।
रुचका रोचना चैव घृतं मधु पयो दधि ।
तथैव पुण्यतीर्थेभ्यो मृदापो मङ्गलानि च ।

[(l. 1) Ś1 B2.4 क्षीरि-. B4 -वृक्षः; M4 -पुष्प- (for -वृक्ष-). Ś1 D4.6.7 -प्रवालाश्; V1 -प्रवाकैश् (for -प्रवालैश्). Ś1 D4–7 -विमिश्रिताः; V1 -विभूषितैः; B4 -*मिश्रितैः. —(l. 2) Ś1 D2.4–7 पूर्णकुंभांस्त्वलंकृत्य; D1 पूर्णकुंभा ह्यलंकृत्य (for the prior half). V1 B2 M4 कांचनानुप(V1 om. °प [subm.]; M4 °नेनेव) कल्पितान् (for the post. half). —(l. 3) Ś1 मंजूका; V1 रुचिका; D1 रुचंगो; D2.4.7 रुचको; D6 कर्पूरं (for रुचका). Ñ1 V1 B1.4 रोचनाश्. Ś1 D4–7 लाजा दधि घृतं मधु (for the post. half). —(l. 4) D1 तवैव (for तथैव). B1 -*र्थेभ्यो. B2 (after corr.) D7 मृदपो; M4 मृदथो (for मृदापो).]

8 $^{a}$) Cr -विकृत- (for -विकच-). T2 -प्रख्यां (for -प्रख्यं). —$^{b}$) Dg1 Dd1 T1.2 G3 M2 Cr.g कांचनं; T3 G1.2 M1 पांडरं (for पाण्डुरं). —$^{c}$) Dd1 ति** (om. hapl.) (for तिष्ठति). —For 8, Ś1 Ñ V1 B D1.2.4–7 M4 subst. :

267* चन्द्रांशुविमलं चापि मणिदण्डमलंकृतम् ।
चामरव्यजनं श्रीमद्रामार्थमुपकल्पितम् ।

[(l. 1) D4.5.7 -विमले (for -विमलं). Ś1 D6 चांबु; D1.2.4.5.7 चारु (for चापि). M4 शुक्लं सुविमलं चारु (for the prior half). D1.2 मणिरत्नम्. V1 विभूषितं (for अलंकृतम्). Ś1 D4–7 मणिदंडे(D5 °ड) स्वलंकृते (for the post. half). —M4 om. l. 2. —(l. 2) B1.2.4 D1.2 चामरं; D5 चामरे (for चामर-). Ś1 D4.6.7 -व्यजने (for -व्यजनं). B2 reads श्रीमद्रा in marg. Ś1 D4.6.7 उपकल्पिते; Ñ1 reads मुप in marg.]

9 $^{b}$) Dg1 T G M1.2 पांडरं (for पाण्डुरम्). —$^{c}$) T3 सद्यं (sic) (for °ज्जं). Dm1 द्युतिकरश्रीमद्. —$^{d}$) Dt1 Dd1 Dm1 Ct -पुरःसरं; Cg.k as in text (for -पुरस्कृतम्). —For 9, Ś1 Ñ V1 B D1.2.4–7 M4 subst. :

268* पूर्णेन्दुमण्डलाभं च श्रीमन्माल्यविभूषितम् ।
रामस्य यौवराज्यार्थमातपत्रं प्रकल्पितम् ।

[(l. 1) Ñ1 °मंडलाकारं; D2 पूर्णेपुं मंगलाभंग-; M4 °विमलाभं च (for the prior half).]

10 $^{a}$) T G M1.2 Cm पांडरश्. T2 सज्जं (for सज्जः). —$^{b}$) Dg1 पांडुरो; T G M1.2 पांडरो. Dg1 Dt1 Dd1 Dm1 च संस्थितः; G1.2 M1 च सुस्थिरः (for च सुस्थितः). Dt1 om. $10^{cd}$. —$^{c}$) Dg1 Dd1 Dm1 प्रस्तुतश्; T G M1.2 Cr.m.g प्रसृतश् (for प्रस्रुतश्). —$^{d}$) G3 प्रतिक्षतः; M2 च वीक्ष्यते (for प्रतीक्षते). —For 10, Ś1 Ñ V1 B D1.2.4–7 M4 subst. :

269* श्वेतस्तुरंगमश्चैव रामार्थमुपकल्पितः ।
मत्तो गजवरश्चैव औपवाह्यः प्रतीक्षते ।

[Ś1 D4–7 transp. lines 1 and 2. B2 reads l. 1 in marg. —(l. 1) D4.6.7 च तुरगश् (D5 °गः) (for तुरंगमश्). D5 श्रेष्ठो (for चैव). Ñ V1 B1–3 तथा च गोवृषः श्वेतः (Ñ2 om. श्वेतः); B4 D1.2 M4 तथा गोवृषभः श्वेतो(B4 °तः) (for the prior half). Ñ V1 B श्वेतश्चाश्वः(B3 श्वेताश्वश्च [by transp.]) प्रकल्पितः; D1.2 M4 वृषा(M4 महा)श्वश्चोप(D1 °श्व प्र)कल्पितः (for the post. half). —(l. 2) Note the hiatus between the two halves. B3 M4 महा- (for मत्तो). D1.2 गजवृषश्; M4 वृषगजश् (for गजवरश्). Ś1 D6 रथश्चैव (for औपवाह्यः). Ñ V1 B D1.2 M4 श्रीमांस्तत्रोपकल्पितः (for the post. half).]

अष्टौ कन्याश्च मङ्गल्याः सर्वाभरणभूषिताः ।
वादित्राणि च सर्वाणि बन्दिनश्च तथापरे ॥ ११
इक्ष्वाकूणां यथा राज्ये संभ्रियेताभिषेचनम् ।
तथाजातीयमादाय राजपुत्राभिषेचनम् ॥ १२
ते राजवचनात्तत्र समवेता महीपतिम् ।
अपश्यन्तोऽब्रुवन्को नु राज्ञो नः प्रतिवेदयेत् ॥ १३
न पश्यामश्च राजानमुदितश्च दिवाकरः ।
यौवराज्याभिषेकश्च सज्जो रामस्य धीमतः ॥ १४
इति तेषु ब्रुवाणेषु सार्वभौमान्महीपतीन् ।
अब्रवीत्तानिदं सर्वान्सुमन्त्रो राजसत्कृतः ॥ १५
अयं पृच्छामि वचनात्सुखमायुष्मतामहम् ।
राज्ञः संप्रतिबुद्धस्य यच्चागमनकारणम् ॥ १६

G. 2. 12. 17
B. 2. 15. 18
L. 2. 16. 18

—After 10, M2 ins. l. 1 of 265*.

**11** M4 om. ( hapl. ? ) 11–12. Dt1 T2.3 om. $11^{ab}$. B2 reads 11 in marg. —$^{a}$ ) Dg1 Dd1 Dm1 Cg. मांगल्याः; G3 M1.2 मंगल्यः; ( for मङ्गल्याः ). T1 अष्टौ च कन्या रुचिरा. —$^{b}$ ) Ñ V1 B D1.2 वराभरण- ( for सर्वाभरण- ). V1 -भूषणाः ( for -भूषिताः ). —After $11^{ab}$, Ś1 D4–7 ins. :

270* रूपयौवनसंपन्ना गणिकाश्च स्वलंकृताः ।
श्वेतपुष्पाणि वेणुश्च निस्त्रिंशो धनुरेव च ।
हेमदाम्नाभ्यलंकृत्य ककुद्मान्पाण्डुरो वृषः ।
सिंहासनं व्याघ्रचर्म संसिद्धश्च हुताशनः ।

[ ( l. 2 ) D6 धेनुश् ( for वेणुश् ). —( l. 3 ) See line 28 of App. I ( No. 10 ). D4.7 स्वलंकृत्य. D4.5.7 ककुद्मी; D6 ककुमान् ( for ककुद्मान् ). D6 पांडरो. —( l. 4 ) See line 30 of App. I ( No. 10 ). D5 समिद्धश्च. D4.7 समिधं च हुताशनं ( for the post. half. ) ]

—$^{d}$ ) Ñ V1 Dg1 Dt1 Dd1 T G M1.2 वंदिनश् ( T2 °तश् ). Ñ1 V1 B1.2 च स्वलंकृताः; Ñ2 B3.4 चाभ्य( B4 °भ्य )लंकृताः. Ś1 D4–7 सूतमागधवंदिनः( D5 °दीसिः ); D1.2 गणिकाश्च स्वलंकृताः. —After 11, Ś1 D4–7 ins. :

271* आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ।
पौरजानपदश्रेण्यो नैगमानां गणैः सह ।
एते चान्ये च बहवः प्रीयमाणाः प्रियं वचः ।

[ See lines 32-34 of App. I ( No. 10 ). —( l. 1 ) D5 आचार्य-. —( l. 2 ) D4.5.7 -श्रेणी ( for -श्रेण्यो ). —( l. 3 ) D4.7 एतानन्यांश्च. D5–7 प्रियंवदाः ( for प्रियं वचः ). ]

**12** M4 om. 12 ( cf. v.l. 11 ). T2 om. ( hapl. ) $12^{cd}$. —$^{c}$ ) G3 तदा ( for तथा- ). —For 12, Ś1 D4–7 subst. :

272* इक्ष्वाकुराजाभ्युदये यच्चान्यदपि किंचन ।
तत्सर्वं कृतमस्माभिः सूत राज्ञे निवेदय ।;

[ ( l. 1 ) D5 -राज्ञो ( for -राजा- ). Ś1 यश्चान्यद्. —( l. 2 ) D4.7 असामी; D6 अस्मिभिः ( sic ). D4.5.7 राज्ञः ( for सूत ). ]

while for 12, Ñ V1 B ( B2 marg. ) D1.2 subst. :

273* इक्ष्वाकुराज्याभ्युचितं यच्चान्यदपि किंचन ।
आभिषेचनिकं द्रव्यं सर्वं तत्रोपकल्पितम् ।

[ ( l. 1 ) B4 -राज्याभ्युपितं; D1.2 -राजाभ्युचितं( D1 °तः ). Ñ1 यथान्यद्. D1 कल्पितं ( for किंचन ). D2 मत्सर्वमुपकल्पितं ( for the post. half ). —( l. 2 ) D1 सर्वं तत्रोपयोग्यं च; D2 यच्चान्यदपि तत्सर्वं ( for the prior half ). D2 तत्र ( for सर्वं ). D1 राज्ञे तत्र निवेदय ( for the post. half ). ]

**13** Ś1 D4–7 om. 13. T1 damaged from त्र in $13^{a}$ up to वेद in $13^{d}$. —$^{d}$ ) Dd1 न ( for नः ). G3 प्रतिवेदयत; M1 प्रतिदेवयेत् ( metathesis ); Cr प्रतिवेदयन्. —For 13, Ñ V1 B D1.2 M4 subst. :

274* अथ ते मन्त्रिणः सूतं सुमन्त्रं सपुरोहिताः ।
ऊचुरभ्यागतानस्मान्राज्ञ आवेदयेति वै ।

[ ( l. 1 ) D1 सुपुरोहिताः. —( l. 2 ) M4 [ अ ]च ( for [ इ ]ति ). Ñ B D2 च ( for वै ). ]

**14** $^{a}$ ) Ś1 Ñ V1 B D1.2.4–7 M4 पश्यामो न हि ( Ś1 D4–7 च ) ( for न पश्यामश्च ).

☞ B4 missing from $14^{cd}$ up to 2. 14. $2^{ab}$.

Ś1 D4–7 om. $14^{cd}$. —$^{c}$ ) Ñ V1 B1–3 D1.2 M4 कृतो ( for सज्जो ).

**15** $^{ab}$ ) Dt1 सर्वांस्तांश्च ( for सार्वभौमान् ). Ś1 Ñ V1 B1–3 D1.2.4–7 M4 इति तैरे( D5 तेनै )वमा( D5 °चा )ज्ञप्तः प्रतीहारो महीपतेः( B1 D5 [ before corr. ] °तिः ). —$^{c}$ ) Ś1 Ñ V1 B1–3 Dg1 Dt1 Dd1 Dm1 D1.2.4–7 G1.2 M1.4 वाक्यं ( for सर्वान् ). —$^{d}$ ) Ś1 Ñ V1 B1–3 D1.2.4–7 G1.2 M1.4 मंत्रिसत्तमः( Ñ B1–3 °मान्; V1 °म ). T1 damaged from तः in सत्कृतः up to पूज्या राज्ञो in l. 2 of 275*. —After 15, Dg1 Dt1 Dd1 Dm1 T G M1.2 ins. :

275* रामं राज्ञो नियोगेन त्वरया प्रस्थितो ह्यहम् ।
पूज्या राज्ञो भवन्तश्च रामस्य च विशेषतः ।

[ Cr does not comment. —( l. 1 ) Dg1 T2.3 G3 [ अ ]स्म्यहं ( for ह्यहम् ). —( l. 2 ) G3 पूज्य ( sic ). T3 राज्ञो; G2 रामो ( for राज्ञो ). Dt1 भवतश्. Dg1 T G M1 तु; M2 हि ( for first च ). Dt1 T3 तु ( for second च ). T1 निवेदतः ( for विशेषतः ). ]

**16** $^{a}$ ) Ś1 B2 D1.6 अहं; V1 M4 स्वयं; D2 अथ ( for अयं ). M4 भवतां ( for वचनात् ). —$^{b}$ ) V2 मुखम्; B1 स्वयम् ( *inf. lin.* as in text ) ( for सुखम् ). Ś1 Ñ V1 B1–3 D1.2.4–7 M4 नृपं ( for अहम् ). —$^{c}$ ) Dg1 Dm1 T2 G3 संप्रतिबुध्यस्व( G3 °स्य ); Cm °बुद्धस्य as in text. ❀ Ck :

G. 2. 12. 18
B. 2. 15. 18
L. 2. 16. 19

**इत्युक्त्वान्तःपुरद्वारमाजगाम पुराणवित् ।**
**आशीर्भिर्गुणयुक्ताभिरभितुष्टाव राघवम् ॥ १७**

**गता भगवती रात्रिरहः शिवमुपस्थितम् ।**
**बुध्यस्व नृपशार्दूल कुरु कार्यमनन्तरम् ॥ १८**

संप्रति उदयसमये सर्वथा बुद्धस्य प्रबुद्धस्य । ❀ —$^{d}$ ) Dt1 चानागमन-. —For $16^{cd}$, Ś1 Ñ V1 B1-3 D1.2.4-7 M4 subst. :

276* राजसंदर्शनार्थित्वमयमावेदयामि वः ।

[ V1 स्वयम्; D1 सम्यग्; M4 अहम् ( for अयम् ). D1 इ ( for वः ). ]

**17** After $17^{ab}$, Dg1 Dt1 Dd1 Dm1 T G M1.2 ins. :

277* सदासक्तं च तद्वेश्म सुमन्त्रः प्रविवेश ह ।
तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ।
शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत ।
सोऽत्यासाद्य तु तद्वेश्म तिरस्करणिमन्तरा ।

[ ( l. 1 ) M2 तदा ( for सदा ). T1 damaged from च up to विशांप in l. 2. G2 हा ( for ह ). —( l. 2 ) T3 तथा ( for तदा ). Dd1 Dm1 सुमंत्रः ( for प्रविश्य ). —( l. 3 ) G3 यशनीयं ( metathesis ). T1 ननेंद्रस्य ( sic ). Dt1 व्यतिष्ठत् ( subm. ); M1 प्रतिष्ठ( before corr. °ष्ठि )त. —( l. 4 ) T3 नरेंद्रस्य ( for तु तद्वेश्म ). Dg1 तिरस्कारिणिम्; Dm1 तिरस्कारणिम् ( before corr. as in Dg1 ); Cm तिरस्करिणीम्; Cg as above. ]

—$^{c}$ ) Dt1 आशीर्भिर्; G2 आशीर्विर् ( both corrupt ) ( for आशीर्भिर् ). Ś1 D4-7 वाग्भिः परमपु( Ś1 D6 °जु )ष्टाभिर्. —$^{d}$ ) Ś1 D4-7 पार्थिवं. —For 17, Ñ V1 B D1.2 M4 subst.; Ś1 D4-7 subst. l. 1 and 2 only for $17^{ab}$ :

278* इत्युक्त्वान्तःपुरद्वारमासाद्य त्वरयान्वितः ।
सुमन्त्रो नृपतिं सुप्तं मत्वा भूयो व्यबोधयत् ।
ब्रह्मेन्द्राग्निपुरोगास्त्वां विबुधा विबुधोपमम् ।
शिवाय बोधयन्त्यद्य कल्याणाय च मानद ।

[ ( l. 1 ) V1 तत्पुर- ( for [ अ ]न्तःपुर- ). Ś1 D4.6.7 स नरेश्वरं; B1 स त्वरान्वितः; D1.2.5 M4 स पुनस्त्वरन् . —( l. 2 ) Ñ1 V1 D7 [ अ ]भ्यबोधयत्; D1 ह्यबोधयत; D5 व्यबोधयन् ( sic ); M4 [ अ ]प्यबोधयत् ( for व्यबोधयत् ). —( l. 3 ) V1 ब्रह्मगाग्नि-; M4 महेंद्राग्नि- ( for ब्रह्मेन्द्राग्नि- ). D2 -पुरोगत् ( sic ). Ñ2 B1.3 D2 विबुधोपम; D1 विबुधोपमाः. —( l. 4 ) Ñ1 reads the prior half in marg. M4 आशिषा ( for शिवाय ). B1 बोधयंत्य*; B2 बोधयंत्वद्य. B2 मानस ( sic ) ( for मानद ). ]

—After 17, Ś1 Dg1 Dt1 Dd1 Dm1 D4-7 T G M1.2 ins. :

279* सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि ।
वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते ।

[ See lines 56 and 57 of App. I ( No. 10 ). —( l. 1 ) Ś1 D5.6 सोमः सूर्यश्च ( for सोमसूर्यौ च ). M2 शशि- ( for शिव- ). Ś1 D6 शिवो वैश्रवणोपि च ( for the post. half ). —( l. 2 ) Ś1 D4-7 अनिलश् ( for वरुणश् ). T1 damaged from second श्च up to नृ in $18^{c}$. Dd1 प्रदेशंतु ( sic ). ]

—Dd1 Dm1 T3 cont. :

280* यथा साङ्गाश्च वेदा वै ब्रह्माणं बोधयन्ति ते ।
तथा त्वां धीर बोधयामि उत्तिष्ठ पुरुषर्षभ ।

[ ( l. 2 ) T3 वीर ( for धीर ) and ह्युत्तिष्ठ [ to avoid hiatus ] ( for उत्तिष्ठ ). ]

**18** See lines 58 and 59 of App. I ( No. 10 ). —$^{cd}$ ) Dt1 Dd1 Dm1 T3 G1 M2 नरशार्दूल; T2 राज° ( for नृप° ). ❀ Cv : नृपशार्दूल इति सम्यक्पाठः । ❀ Ś1 D4-7 प्रतिबुध्यस्व नृपते सर्वकल्याणसिद्धये. —For 18, Ñ V1 B1-3 D1.2 M4 subst., while Ś1 D4.5.7 ins. after 282*; D6 ins. after 283* :

281* गता निशेयं कच्चित्ते सुखेन नृपसत्तम ।
प्रतिबुध्यस्व राजर्षे धर्मकृत्यानि कारय ।

[ D6 reads l. 1 in marg. —( l. 1 ) Ś1 स्वापने ( for सुखेन ). —( l. 2 ) D6 राजेंद्र ( for राजर्षे ). Ś1 D4-7 राजकार्याणि; D1.2 राजकृत्यानि ( for धर्मकृत्यानि ). ]

—After 18, Ś1 D4-7 ins. :

282* इन्द्रमस्यां हि वेलायामभितुष्टाव मातलिः ।
सोऽजयद्दानवान्सर्वांस्तथा त्वां बोधयाम्यहम् ।
वेदाः साङ्गाः सर्विगणा यथा कमलसंभवम् ।
ब्रह्माणं बोधयन्त्यद्य तथा त्वां बोधयाम्यहम् ।
आदित्यः सह चन्द्रेण यथा भूतधरामिमाम् । [5]
बोधयत्यद्य पृथिवीं तथा त्वां बोधयाम्यहम् ।
उत्तिष्ठ त्वं महाभाग कृतकौतुकमङ्गलः ।
विरोचमानो वपुषा मेरोरिव दिवाकरः ।
इदं तिष्ठति रामस्य सर्वमेवाभिषेचने ।
पौरजानपदश्रेणी नैगमश्चागतो जनः । [10]
असौ वसिष्ठो भगवान्ब्राह्मणैः सह तिष्ठति ।
क्षिप्रमाज्ञाप्यतां राजन्राघवस्याभिषेचनम् ।
यथा ह्यगोपाः पशवो यथा सैन्यमनायकम् ।
एवं प्रजाः प्रजापाल भवन्ति ह्यनधिष्ठिताः । [15]
चन्द्रहीना यथा रात्रिः सूर्यहीनमहो यथा ।
तथा भवति तद्राष्ट्रं यत्र राजा न दृश्यते ।

[ Cf. lines 48-55 and 60-66 of App. I ( No. 10 ). —( l. 1 ) Ś1 अतितुष्टाव. —( l. 2 ) D7 यानवान्. —( l. 3 ) Ś1 देवाः. D4.7 ऋषिगणाः.—( l. 4 ) D5 ( before corr. पृथिवीं ) पृथिव्यां ( for तथा त्वां ). —( l. 6 ) Ś1 बोधयंत्यथ. —( l. 7 ) D5 महाबाहो. —( l. 9 ) D4.5.7 [ अ ]भिषेचनं. —( l. 12 ) Ś1 शीघ्रं ( for राजन् ). —( l. 14 ) Ś1 भवता ( for भवन्ति ). —( l. 16 ) D4.5.7 यदा ( for यत्र ). ]

ब्राह्मणा बलमुख्याश्च नैगमाश्चागता नृप ।
दर्शनं प्रतिकाङ्क्षन्ते प्रतिबुध्यस्व राघव ॥ १९
स्तुवन्तं तं तदा सूतं सुमन्त्रं मन्त्रकोविदम् ।
प्रतिबुध्य ततो राजा इदं वचनमब्रवीत् ॥ २०
न चैव संप्रसुप्तोऽहमानयेहाशु राघवम् ।
इति राजा दशरथः सूतं तत्रान्वशात्पुनः ॥ २१

G. 2. 12. 23
B. 2. 15. 27
L. 2. 16. 42

—D6 cont. ( followed by 281* ) :

283* यथा नायकहीनैव मुक्तानामावली यथा ।

19 $^{b}$) Dg1 Dd1 Dm1 G1 [ आ ]गता नृपाः; Dt1 [ आ ]गतास्त्विह. —For 19$^{ab}$, Ñ V1 B1-3 D1.2 M4 subst., while Ś1 D4-7 ins., after 281* :

284* पुरोधसो मन्त्रिणश्च पौरजानपदा जनाः ।

[ M4 पुरोधसा. D6 पौरा ( for पौर- ). Ś1 D1.4-7 M4 तथा; D2 तदा ( for जनाः ). ]

—$^{c}$) Ś1 Ñ V1 B1-3 Dg1 D1.2.4-7 ते( D2 ना ) भिकांक्षंति; Dt1 Dd1 Dm1 T3 G1.2 M1.4 तेभिकांक्षंते; G3 प्रतिकांक्षंति ( for प्रतिकाङ्क्षन्ते ). —$^{d}$) Ś1 D4-7 M4 प्रतिबोद्धुं ( D6 °धं ) त्वमर्हसि; Ñ V1 B1-3 D1.2 प्रतिबोद्धुं ( D2 °ब्योद्धुं ) नृपार्हसि.

20 $^{a}$) T1 स्तुवंतं तु; G1 M1 संस्तुवंतं; G2 M2 तं( G2 *inf. lin.* also सं )स्तुवंतं ( by transp. ) ( for स्तुवन्तं तं ). —$^{c}$) Dg1 T2.3 G2 M1.2 तदा ( for ततो ). T1 damaged from राजा up to यदस्यभि in l. 1 of 288*. —For 20, Ś1 D4-7 subst. :

285* तं तथा पुनरभ्येत्य बोधयन्तं नराधिपम् ।
अभ्यपूर्यत शोकेन भूय एव नराधिपः ।
स तु शोकाभिसंतप्तः सुमन्त्रमिदमब्रवीत् ॥

[ ( l. 1 ) D4.7 वृथा ( for तथा ). Ś1 D6 पुनरेत्यात्र. D5 बोधयानं. —( l. 2 ) See line 68 of App. I ( No. 10 ). Ś1 D6 अन्व( D6 °भ्य )भूयत. D5 महीपतिः ( for नराधिपः ). ]

—Thereafter all cont. :

286* शोकरक्तेक्षणो धीमान्वीक्ष्य वाचावधारितम् ।
सूत किं हतरूपं मामस्तुत्यं स्तोतुमिच्छसि ।
वाक्यैस्तावत्तु मर्माणि मम भूयो निकृन्तसि ।
सुमन्त्रः कुत्सनां श्रुत्वा दृष्ट्वा दीनं च पार्थिवम् ।
प्रगृहीताञ्जलिस्तत्र ततः किंचिदपाक्रमत् । [ 5 ]
ततः पापसमाचारा कैकेयी पार्थिवं वचः ।
उवाच परमं तीक्ष्णं वाक्यज्ञा वाक्यमूर्जितम् ।
किमेतद्वद मे वाक्यं राजंस्त्वं प्राकृतो यथा ।
राममाहूय विस्रब्धं वनमद्य विसर्जय ।
यदि सत्यप्रतिज्ञोऽसि कुरुष्व वचनं मम । [ 10 ]
नायं कालो हि शोकस्य न मोहस्योपपद्यते ।
प्रव्राज्य रामं भरतं यौवराज्येऽभिषिच्य च ।
निःसपत्नां च मां कृत्वा भवाद्य विगतज्वरः ।
स तुन्नो वाक्यखड्गेन प्रतोदेनेव सद्गवः ।
ततः स राजा सूतं तं पुनरेवाभ्यभाषत । [ 15 ]

[ ( l. 1 ) Ś1 -[ ई ]क्षणं. D5 उदीक्ष्यैवाथ धार्मिकः ( for the post. half ). —( l. 2 ) D5 सूत किं मां हतप्रायमस्तुत्यं स्तोतुमिच्छसि. —( l. 3 ) Cf. 252*. D4.5.7 तु खलु ( for तावत्तु ). D5 कर्माणि ( for मर्माणि ). —For lines 4-5 Cf. 2. 12. 19. —( l. 4 ) D5 कुत्सितं ( for कुत्सनां ). Ś1 D6 कृत्वा ( for श्रुत्वा ). —( l. 5 ) D4.7 सूतः; D5 भूतः ( for ततः ). —For lines 6-8 Cf. 2. 12. 12 and 13$^{ab}$. —( l. 9 ) Cf. line 2 of 244*. D5.7 विश्रब्धं. —For lines 10 and 11 Cf. 245*. ]

—For 20, Ñ V1 B1-3 D1.2 M4 subst. :

287* तं तथा पुनरभ्येत्य बोधयन्तं नराधिपम् ।
सुमन्त्रं दुःखसंतप्तस्त्वरमाण इवाब्रवीत् ।

[ B2 reads l. 1 in margin. —( l. 1 ) Ñ V1 B1.3 D1 नराधिपः. —( l. 2 ) V1 त्वमवमान [ hypm. ] इव; B1.3 त्वरयन्निदम्; D1.2 त्वरमाणमिव. ]

—After 20, Dg1 Dt1 Dd1 Dm1 T G M1.2 ins. :

288* राममानय सूतेति यदस्यभिहितो मया ।
किमिदं कारणं येन ममाज्ञा प्रतिहन्यते ।

[ T1 damaged up to भि in l. 1 ( cf. v.l. 20 ). —( l. 1 ) Dg1 Dm1 G1 यदस्याभिहितो; M2 °भिहतो. Cm.k.t$p$ [ ऽ ]नया ( for मया ). G2 M1 यदस्यभिहितस्त्वया ( for the post. half ). ❀ Ct: यदस्यभिहितोऽनया इति पाठेऽस्त्येत्युपलक्षणं मया चेत्यर्थः । ❀ —( l. 2 ) T1.2 M2 मदाज्ञा; Cm ममाज्ञा ( as above ). Dt1 T3 प्रतिवाह्यते. ]

21 $^{a}$) Dt1 [ ए ]वं ( for [ ए ]व ). M3 resumes from प्तोऽहं ( cf. v.l. 1 ). —$^{b}$) Dg1 आनयत्वाशु. —$^{c}$) T1 रा*. —For 21, Ś1 D4-7 subst. :

289* सुमन्त्र नैव सुप्तोऽस्मि रामं त्वं क्षिप्रमानय ।
सत्यपाशनिबद्धोऽस्मि सूत संभ्रान्तमानसः ।
रामं द्रष्टुमिहेच्छामि तं च शीघ्रमिहानय ।

[ ( l. 1 ) D5 नाव- ( for नैव ). D4.7 त्वं रामं ( by transp. ). D4 शीघ्रम् ( for क्षिप्रम् ). For lines 2 and 3 Cf. 247*. D6 reads lines 2-3 in marg. —( l. 2 ) D5 -विबद्धो. D4.5.7 विभ्रांत-. —( l. 3 ) D5 उपानय ( for इहानय ). ]

—D4.5.7 cont. :

290* श्रुत्वा तु राज्ञो वचनं कैकेयी तमथाब्रवीत् ।
सुमन्त्र राजवचनाद्गच्छ त्वं राममानय ।
यथा च शीघ्रमेत्यैति तथा संत्वरयस्व तम् ।

whereas Ñ V1 B1-3 D1.2 M4 subst. for 21 :

291* सुमन्त्र नावसुप्तोऽस्मि रामं त्वं क्षिप्रमानय ।
इति राजा दशरथः सुमन्त्रं पुनरन्वशात् ।

G. 2. 12. 24
B. 2. 15. 27
L. 2. 16. 43

स राजवचनं श्रुत्वा शिरसा प्रतिपूज्य तम् ।
निर्जगाम नृपावासान्मन्यमानः प्रियं महत् ॥ २२
प्रपन्नो राजमार्गं च पताकाध्वजशोभितम् ।
स सूतस्तत्र शुश्राव रामाधिकरणाः कथाः ॥ २३
ततो ददर्श रुचिरं कैलाससदृशप्रभम् ।
रामवेश्म सुमन्त्रस्तु शक्रवेश्मसमप्रभम् ॥ २४
महाकपाटपिहितं वितर्दिशतशोभितम् ।
काञ्चनप्रतिमैकाग्रं मणिविद्रुमतोरणम् ॥ २५

[ (l. 1) Ñ2 B3 नैव (for नाव-). —(l. 2) Ñ2 B1.3 पुनरन्वगात्. ]

22 $^{a}$) G3 damaged from जवचनं. —T1 damaged from प्रतिपूज्य in $^{b}$ up to 22$^{d}$. —For 22, Ś1 Ñ V1 B1–3 D1.2.4–7 M4 subst. :

292* सुमन्त्रस्तद्वचः श्रुत्वा सभार्यस्य नृपस्य ह ।
निर्जगाम सुसंभ्रान्तस्तस्माद्राजनिवेशनात् ।

[ (l. 1) D4–7 तु (for तद्). Ñ V1 B1–3 D1.2 M4 इति राज्ञो वचः श्रुत्वा सुमंत्रः(Ñ2 °त्रं) त्वरितस्तदा(D1.2 स त्वरन्निव; M4 प्रहसन्निव). —(l. 2) Ñ B1–3 D5 [ अ ]थ; V1 [ अ ]नु- (for सु-). D1 दारान् (sic) (for राज-). ]

23 $^{a}$) Dg1 Dm1 प्रसन्नो. —After 23$^{ab}$, Dg1 Dt1 Dd1 Dm1 T G M1.2 ins. :

293* हृष्टः प्रमुदितः सूतो जगामाशु विलोकयन् ।

[ G1.2 हृष्ट-. Dg1 प्रहृष्टमुदितः. ]

—$^{c}$) T1 **व (for शुश्राव). —For 23, Ś1 Ñ V1 B1–3 D1.2.4–7 M4 subst. :

294* निष्क्रम्य चैव त्वरितं राममानयितुं तदा ।
रथेन जविताश्वेन राममानयितुं गृहात् ।
जनौघं राजमार्गस्थं प्रतिव्यूहमुपागतम् ।
शृण्वन्वाचः कथयतां रामाभ्युदयसंयुताः ।

[ (l. 1) D5 (before corr.) निष्क्राम्य. Ñ V1 B1–3 D1.2 त्वरितो; M4 परितो (for त्वरितं). —(l. 2) Ñ V1 B3 जव(V1 °वि)नाश्वेन. D4.7 गृहं (for गृहात्). Ñ V1 B1–3 D1.2.5 M4 ययौ रामगृहं प्रति(V1 पुनः) (for the post. half). —(l. 3) D7 राजमार्गस्य (for °स्थं). Ñ V1 B2.3 D2.4.5.7 M4 प्रतिव्यूहन्. Ñ1 V1 B1.2 उपागतः; D4.7 उपागमत् (for °तम्). —(l. 4) Ñ B3 D5 रामाभिस्तव-; V1 B1 D1.2.4.7 रामाभिष्टव- (for °भ्युदय-). Ñ V1 B1–3 D1.2 -संहिताः (for -संयुताः). ]

—Thereafter all cont. :

295* अद्य रामो यौवराज्यं लप्स्यते पितुराज्ञया ।
अहो महोत्सवोऽस्माकमद्यायं भविता पुरे ।
मृदुर्दान्तः पौरहितः सर्वभूतहिते रतः ।
युवराजः किलास्माकमद्य रामो भविष्यति ।
अहोऽद्यानुगृहीताः स्मो यत्साधुजनवत्सलः । [5]
पालयिष्यति नो रामः पिता पुत्रानिवौरसान् ।
इति तत्र जनौघस्य शृण्वन्वाचः समन्ततः ।
ययौ सुमन्त्रस्त्वरितो राममानयितुं गृहात् ।

[ (l. 1) Ś1 D4.6.7 रामोद्य युवराजत्वं (for the prior half). Ś1 प्राप्स्यति; D1.2.4–7 M4 प्राप्स्यते (for लप्स्यते). Ś1 D4–7 नृप (D4 भूप; D5 राज)शासनात्; D1 पुनराज्ञया. —(l. 2) B2 अद्याहं; D1 अत्रायं; D2 यथायं; D4.7 अरयायं (for अद्यायं). M4 [ S ]द्याय-मस्माकं (by transp.). D5 महान् (for पुरे). —M4 om. lines 3-4. Ś1 D4.6.7 om. l. 3 and read l. 5 after l. 2. —(l. 3) Ñ1 परहितः. D1.2.5 -मनोहरः (for -हिते रतः). Ñ2 repeats the post. half of l. 3. —(l. 4) D1.2 युवराजा (sic). Ś1 D4–7 [ अ ]द्यायम् (for [ अ ]स्माकम्). Ś1 D1.2.4–7 अस्माकं (D1.2 अद्यायं; D5 यद्रामो) भविता पुरे (for the post. half). —(l. 5) Ś1 D4.6.7 अद्याहो (by transp.); B2 अहो हि (for अहोऽद्य). Ś1 V1 D4.6.7 स्म (for स्मो). —(l. 6) D4 राजा (for रामः). —(l. 7) Ś1 D4–7 तस्य (for तत्र). M4 वचः शृण्वन् (for शृण्वन्वाचः). —(l. 8) D1 गृहान्; D4.7 गृहं (for गृहात्). ]

—After 23, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

296* अभिषेचनसंयुक्ताः सर्वलोकस्य हृष्टवत् ।

[ T1 damaged after सर्व up to रामवेश्म in 24$^{c}$. G3 damaged for लोकस्य. T3 संनिधौ (for हृष्टवत्). ]

24 T1 damaged up to रामवेश्म in 24$^{c}$ (cf. v.l. 23). Ñ V1 B1–3 D1.2 M4 om. 24. D6 reads 24 in marg. —$^{b}$) D5 कैलाश-. D5 T2 G M1–3 -शिखरप्रभं (for -सदृशप्रभम्). —T3 om. 24$^{cd}$. —$^{d}$) Ś1 D4–7 त्रिविष्टप- (for शक्रवेश्म-). —After 24, G2 reads l. 1 of 300* repeating it in its proper place.

25 D1.2 M4 om. 25. G2 om. (hapl.? Cf. l. 1 of 300*) 25$^{ab}$. Ñ V1 B1–3 transp. 25 and 26. —$^{a}$) Ś1 B3 D6 T G1.3 M1.2 Cr.m.g -कवाट-; Ct as in text (for -कपाट-). B2 -[ अ ]पिहितं; D4 T2 G3 Cm.g -विहितं; T1 -विततं; Cr.t as in text (for -पिहितं). —$^{b}$) Ñ1 वितर्दिगत-; Ñ2 वितर्दीशत-; V1 विनिर्दिशित-; B2 वडभीशत- (for वितर्दिशत-). D4 दीप्तमेरुसमप्रभं. —D4 om. 25$^{cd}$. —$^{c}$) Dg1 कांचनं. Ñ -प्रतिमैकाग्र्य-; V1 -द्युतिमेकाश्वं; B1 -प्रतिमैकाग्र्यं; D5 °मौकाग्रं; T2 °कैकाग्रं (for °मैकाग्रं). —$^{d}$) B1.2 -प्रतिम- (for -विद्रुम-). —After 25, Ñ V1 B1–3 ins., while D1.2 M4 ins. after 26 :

297* रामोपवाह्यं च गजं मुक्ताहारविभूषितम् ।
कृताङ्गदं चन्दनेन ददर्शैरावतोपमम् ।

[ (l. 1) B1.3 रामोपराज्यं. —(l. 2) Ñ2 B2.3 M4 कृतांगद-. V1 कृतांगचंदनेनैव (for the prior half). ]

शारदाभ्रघनप्रख्यं दीप्तं मेरुगुहोपमम् ।
दामभिर्वरमाल्यानां सुमहद्भिरलंकृतम् ॥ २६
स वाजियुक्तेन रथेन सारथि-
र्नराकुलं राजकुलं विलोकयन् ।
ततः समासाद्य महाधनं मह-
त्प्रहृष्टरोमा स बभूव सारथिः ॥ २७

G. 2. 12. 35
B. 2. 15. 41
L. 2. 16. 55

**26** Ñ V1 B1-3 transp. 25 and 26. D4 om. 26[ab]. —[a]) D7 (before corr. शारदाभ्र-) शरदभ्र-. —[b]) Dg1 Dm1 D7 दीप्त- (for दीप्तं). Dt1 Dd1 Dm1 मेरुगुहासमं; D5 °गृहोपमं; D7 °समप्रभं. Ś1 D6 दीप्तपावकस(D6 °सु)प्रभं. —For 26[ab], Ñ V1 B1-3 D1.2 M4 subst.:

298* अथाससाद रामस्य स वेश्माभ्रचयोपमम् ।

[Ñ2 -[अ]रुचयोपमं; D2 [अ]त्र चयोपमं.]

—[c]) Dg1 Dt1 Dd1 Dm1 S(except M4)मणिभिर् (for दामभिर्). T1 damaged from वर up to राकी in l. 1 of 300*. Ś1 D4.6.7 T3 वरमाल्यै(T3 °ल्यै)श्च. Ñ B1-3 D1.2 M4 प्र(B1.2 प्रा)लंबैः(B3 °बः) समलंकृतं; V1 प्रलंबैः समंततः (subm.).—After 26, M2 ins.:

299* ततो ददर्श माल्यैश्च सुमहद्भिरलंकृतम् ।

—M2 cont.; Ś1 Dg1 Dt1 Dd1 Dm1 D4-7 T G M1.3 ins. after 26:

300* मुक्तामणिभिराकीर्णं चन्दनागरुधूपितम् ।
गन्धान्मनोज्ञान्विसृजद्दार्दुरं शिखरं यथा ।
सारसैश्च मयूरैश्च विनदद्भिर्विराजितम् ।
सुकृतेहामृगाकीर्णमुत्कीर्णं भक्तिभिस्तथा ।
मनश्चक्षुश्च भूतानामाददत्तिग्मतेजसा । [5]
चन्द्रभास्करसंकाशं कुबेरभवनोपमम् ।
महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम् ।
मेरुशृङ्गसमं सूतो रामवेश्म ददर्श ह ।
उपस्थितैः समाकीर्णं जनैरञ्जलिकारिभिः ।
उपादाय समाक्रान्तैस्तदा जानपदैर्जनैः । [10]
रामाभिषेकसुमुखैरुन्मुखैः समलंकृतम् ।
महामेघसमप्रख्यमुदग्रं सुविराजितम् ।
नानारत्नसमाकीर्णं कुब्जकैरपि चावृतम् ।

[G2 reads l. 1 after 24 repeating it here. —(l. 1) T1 damaged up to राकी. Dg1 Dt1 Dd1 Dm1 -[अ]ग(Dt1 °गु)रुभूषितं. Ś1 D4-7 जनैरंजलिसंहितैः(D4.7 °हतैः) (for the post. half). —(l. 2) T3 गुडान् (for गन्धान्). Dd1 Dm1 विदधद् (for विसृजद्). Dm1 (before corr.) T2.3 G1.3 M2.3 Cv.r दार्दरं; T1 G2 दा(G2 द)र्दरं; Cg.t as above; Ck दर्दरं (for दार्दुरं). Ś1 D4-7 यथा मलयपर्वतः(D5 °तं) (for the post. half). —(l. 3) G2 सारसैश्च. Dd1 विन*द्भिर्; D7 (before corr.) विनवद्भिर् (for विनदद्भिर्). —Ś1 D6 om. l. 4. —(l. 4) Dg1 सुकृतेह. Dg1 T3 G1.3 M2.3 Cr.g सुकीर्णं; Dm1 T1 Cv.m सत्कीर्णं; T2 G2 M1 संकीर्णं; Ct as above (for उत्कीर्णं). G3 M2 Cr भित्तिभिस्; M1 पक्षिभिस्; Cv.m.g.k.t (for भक्तिभिस्). G3 तदा (for तथा). —(l. 5) T1 damaged from नश्च up to कुबेर in l. 6. D6 ममतक्षुश्च (sic); T3 मनश्चक्षु-. T3 -प्रभूतानाम् (for च भूतानाम्). Dg1 आददन्. Ś1 D4-7 T3 आददानमिव श्रिया; M2 आददन्निव तेजसा (for the post. half). —(l. 6) Ś1 D4-7 -सदनोपमं; M3 -भवनोत्तमं. —(l. 7) Ś1 D4-7 महेंद्रसद्म-. —(l. 8) Ś1 -वेश्मोपमं; D4-7 -शृंगोपमं (for -शृङ्गसमं). G2 रामो (sic). Dm1 वेश्मं (sic). —Ś1 D4.6.7 om. l. 9-13. —(l. 9) D5 अंजलिकैस्तथा. —(l. 10) D5 उपायनसमाकीर्णं (for the prior half). Dd1 Dm1 T2 G1.2 M1-3 तथा; D5 यथा (for तदा). T1 damaged from त in तदा up to first म in l. 12. —D5 om. l. 12-14. —(l. 12) Dg1 महामेरु-; G2 महावेग- (for महामेघ-). M3 -गिरिप्रख्यम्. Dm1 M3 उदयं (for उदग्रं). Dg1 T G M1-3 सुविभूषितम्. —(l. 13) Dg1 T G1.2 M1-3 कुब्जकैरातकावृतं; G3 कुब्जवामनिकावृतं (for the post. half).]

**27** Ś1 D4.6.7 om. 27[ab]. —[b]) Dg1 निराकुलं; Dt1 समाकुलं. Dg1 D5 T G3 राजपथं; Cr.k.t as in text (for राजकुलं). Dt1 Dd1 Dm1 D5 G1.2 M1-3 विराजय(G2 °*) न् (for विलोकयन्). Ñ V1 B1-3 D1.2 M4 तदागतः(Ñ2 B3 D2 °तं) पौरजनं प्र(Ñ1 °जनानि; B3 °जनप्र; D1 °जनं स) हर्षयन् (B3 °ण). —After 27[ab], Ñ V1 B1-3 D1.2 ins.:

301* विवेश रामस्य गृहं महर्द्धिम-
न्महेन्द्रवेश्मप्रतिमं नृपाज्ञया ।;

[(l. 1) Ñ2 B3 समृद्धिमन्; B2 तदृद्धिमद्; D1 तदर्चितं; D2 तदर्द्धिमन्. —(l. 2) B2 तदाज्ञया.]

while Dg1 Dt1 Dd1 Dm1 D5 T G M1-3 ins.:

302* वरूथिना रामगृहाभिपातिना
पुरस्य सर्वस्य मनांसि हर्षयन् ।

[(l. 1) Dt1 D5 राजगृह-. —(l. 2) D5 परस्परं सर्व- (for पुरस्य सर्वस्य). D5 (before corr.) मनसि. Dd1 रंजयन्. T1 damaged from हर्षयन् up to रोमा स in 27[d].]

—[c]) Ñ V1 B1-3 D1.2 M4 स ततः (for ततः). Ñ V1 B1-3 D1.2 M4 महर्द्धिमत्तदा(V1 °था) (for महाधनं महत्). —[d]) M2 -चेता (for -रोमा). Ñ V1 B1-3 D1.2 M4 जहर्ष सूतो मुमुदेभिवीक्ष्य च(D1 om. च; D2 सः). —After 27, Ś1 Ñ V1 B1-3 Dg1 Dt1 Dd1 Dm1 D1.2.4-7 S ins.:

303* मृगैर्मयूरैश्च समाकुलोल्बणं
गृहं वरार्हस्य शचीपतेरिव ।
स तत्र कैलासनिभाः स्वलंकृताः
प्रविश्य कक्ष्यास्त्रिदशालयोपमाः ।,

G. 2. 12. 38
B. 2. 15. 48
L. 2. 16. 59

तदद्रिकूटाचलमेघसंनिभं
महाविमानोत्तमवेश्मसंघवत् ।
अवार्यमाणः प्रविवेश सारथिः
प्रभूतरत्नं मकरो यथार्णवम् ॥ २८

इति श्रीरामायणे अयोध्याकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

[ (l. 1) Ś1 D4.6.7 समाकुलं सदा; D5 °कुलांगणं; T3 G2.3 M2.3 °कुलोद्वणं. Ñ V1 B1-3 D1.2 M4 अनेकरत्नाचित( V1 °चित; D1.2 M4 °कर )मम्य( Ñ2 B1 °ल )लंकृतं. —(l. 2) Ś1 D6 च रामस्य; M4 महार्हस्य (for वरार्हस्य). Ñ V1 B1-3 D1.2 M4 om. lines 3-4. —(l. 3) D5.7 कैलाश-. —(l. 4) Dg1 प्रतीर्य (for प्रविश्य). Dg1 Dm1 D4.7 कक्षास् (for कक्ष्यास्). D5 त्रिदिवालयोपमाः. ]

—Thereafter Ś1 Ñ V1 B1-3 D1.2.4-7 M4 cont. :

304* उपस्थितैर्मागधसूतबन्दिभि-
स्तथैव वैतालिकसौख्यशायिकैः ।
अभिष्टुवद्भिर्गुणतो नृपात्मजं
समावृतं राजपथं ददर्श सः ।
स सप्तकक्षं पुरुषैरलंकृतै- [5]
र्विनीतवेषैर्बहुभिः सुरक्षितम् ।
विवेश रामस्य महात्मनो गृहं
महीयमानो नृपमन्त्रिसत्तमः ।

[ (l. 1) D5 M4 उपस्थितं. D2 मागधवंदिभिस्ततः. —(l. 2) B1.2 वैतानिक-. V1 D5.6 -सौम्य( D5 °ल्य; D6 °ख्य )शायिकैः; D1 -सौख्यशाब्दिकैः; D2 -सोक्तशाब्दिकैः. —(l. 3) D2.5 अभिस्तुवद्भिर्. D4 गृणतो; D7 गणतो. —(l. 4) Ñ M4 समावृत-; D2 समाश्रितं (for समावृतं). Ñ M4 -द्वारपथं (for राजपथं). —(l. 5) Ś1 D5 M4 -कक्ष्यं; B3 D1 -कक्षैः. D6 समस्तकक्ष्यं; D7 समस्तकक्षा. Ś1 B1 D1.2.4.6 M4 अलंकृतं. —(l. 6) Ś1 सुरंजितं. —M4 om. lines 7-8. —(l. 7) Ñ1 D5 गृहं महात्मनो (by transp.); D1.2 गृहं महर्द्धिमन्. —(l. 8) Ś1 D4.6.7 -सत्तमैः. ]

—After 303*, Dg1 Dt1 Dd1 Dm1 T G M1-3 cont. :

305* प्रियान्नरान्राममते स्थितान्बहू-
न्व्यपोह्य शुद्धान्तमुपस्थितो रथी ।
स तत्र शुश्राव च हर्षयुक्ता
रामाभिषेकार्थकृतां जनानाम् ।
नरेन्द्रसूनोरभिमङ्गलार्थाः [5]
सर्वस्य लोकस्य गिरः प्रहृष्टाः ।
महेन्द्रसद्मप्रतिमं तु वेश्म
रामस्य रम्यं मृगपक्षिजुष्टम् ।
ददर्श मेरोरिव शृङ्गमुच्चं
विभ्राजमानं प्रभया सुमन्त्रः । [10]
उपस्थितैरञ्जलिकारिभिश्च
सोपायनैर्जानपदैर्जनैश्च ।
कोट्यापरार्धैश्च विमुक्तयानैः
समाकुलं द्वारपथं ददर्श ।
ततो महामेघमहीधराभं [15]
प्रभिन्नमत्यङ्कुशमप्रसह्यम् ।
रामोपवाह्यं रुचिरं ददर्श
शत्रुंजयं नागमुदग्रकायम् ।
स्वलंकृतान्साश्वरथान्सकुञ्जरा-
नमात्यमुख्यांश्शतशश्च वल्लभान् । [20]
व्यपोह्य सूतः सहितान्समन्ततः
समृद्धमन्तःपुरमाविवेश ह ।

[ (l. 1) Dt1 T1 वरान् (for नरान्). M2 -नरे (for -मते). —(l. 2) Dg1 T3 G1.2 M3 Cg अपोह्य; T1.2 उपेत्य; M2 उपोह्य; Cm.t as above (for व्यपोह्य). T1 damaged from शुद्धान्त up to माभिषे in l. 4. T3 सिद्धांतम्. —(l. 3) Dd1 Dm1 हर्षयुक्तो. —(l. 4) Dg1 Dt1 Dm1 M2.3 Cr.m.g -कृता; G2 -युतां; M1 -युता; Ck -कृतः (for -कृतां). ❀ Ct : रामस्याभिषेकार्थममिषेकप्रयोजनकं कर्म कुर्वतां जनानां गिरः...... । ❀ —(l. 5) Dt1 अधि-; G3 अपि; all Cs as above (for अभि-). —(l. 6) T1 G3 M2.3 Cv.m प्रहृष्टः. —(l. 7) Dg1 Cg -वेश्म (for -सद्म). Dm1 च (for तु). —(l. 8) Dg1 हर्म्यं (for रम्यं). —(l. 9) Dg1 M2 उच्छ्रितं; Dd1 Dm1 G3 उच्चैर् (for उच्चं). —(l. 10) G3 विभ्राजमान-. T1 damaged from नं up to जानप in l. 12. —(l. 11) Dg1 T2.3 G M1-3 अंजलिकार( G3 °*; M2 °रि )कैश्. Dg1 च तैः. —(l. 12) T1.2 G3 M2 च मर्त्यैः; T3 वृतं च; G1.2 M1 अनेकैः (for जनैश्च). —(l. 14) Dt1 द्वारपदं. Dg1 ददर्श ह. —(l. 15) Dg1 दूतो; Cg as above (for ततो). —(l. 16) Dt1 Dm1 अल्पसह्यं. —(l. 17) T2 -[ उ ]प वाक्यं (sic). —(l. 18) T1 damaged from मुदग्र up to मुख्यांञ्श in l. 20. T2 नागमहेंद्रकायं. —(l. 19) M2 अलंकृतान्. Dm1 च कुंजरान्; G3 damaged for न्सकुञ्जरा. —(l. 20) G1.2 M2 -वृद्धान् (for -मुख्यान्). Dt1 Dd1 Dm1 च ददर्श (for शतशश्च). T2 दुर्लभान्. —(l. 21) Dg1 सहितः; M3 सहिताः (for सहितान्). —(l. 22) Dg1 Dt1 Dd1 T G1.3 M1 om.; G3 ह्य (for ह). ]

28 D4.5 om. 28. —[a]) Dt1 ततो (for तद्). Ck.t[p] तदेन्द्रकूट-. —[b]) Dt1 -विमानोपम-. Dm1 -संभवं; G2 -संघाव (subm.) (for -संघवत्). —For 28[ab], Ś1 Ñ V1 B1-3 D1.2.6.7 M4 subst. :

# १४

स तदन्तःपुरद्वारं समतीत्य जनाकुलम् ।
प्रविविक्तां ततः कक्ष्यामाससाद पुराणवित् ॥ १ ॥
प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः ।
अप्रमादिभिरेकाग्रैः स्वनुरक्तैरधिष्ठिताम् ॥ २
तत्र काषायिणो वृद्धान्वेत्रपाणीन्स्वलंकृतान् ।
ददर्श विष्ठितान्द्वारि स्त्र्यध्यक्षान्सुसमाहितान् ॥ ३
ते समीक्ष्य समायान्तं रामप्रियचिकीर्षवः ।
सहभार्याय रामाय क्षिप्रमेवाचचक्षिरे ॥ ४

G. 2. 13. 4
B. 2. 16. 6
L. 2. 17. 4

---

306* सितं च शैलोत्तमशृङ्गसंनिभं
महाविमानप्रतिमं जनौघवत् ।

[ (l. 1) D1.2 M4 सितोच्च-. Ñ V1 B1–3 D7 -वर्चसं ( for -संनिभं ). —(l. 2) V1 महावितान-. M4 महौघवत्. ]

—$^{c}$) Ś1 D6 स भोज्यमानः; Dg1 अवर्ज्यमाणः; D2 आवार्यमाणः; D7 सभाह्यमानः ( sic ); M3 अवर्यमाणः ( for अवा° ). Ś1 Ñ V1 B1–3 D1.6.7 M4 तद्गृहं; D2 सद्गृहं ( for सारथिः ). —$^{d}$) Ś1 D6.7 संपूज्यमानो नृपमंत्रिसत्तमैः; Ñ V1 B1–3 D1.2 M4 स राजपुत्रस्य नरेंद्रसारथिः. T1 damaged from थार्णवम् up to स तदन्तः in 2. 14.1$^{a}$.

Colophon missing in B4 D3; T1 damaged ( cf. v.l. 28 ). —*Sarga name* : Ś1 सुमंत्रप्रवेशनं; Ñ V1 B1.2 D5 आ( Ñ2 अ )भिषेचनिकद्रव्योपक्षेपः; B3 रामानयनोपक्रमः; D1.2 द्रव्याभिक्षेपो; D4 सुमंत्रप्रेषणो; D6 उद्वेगे सुमंत्रप्रेषणं; D7 महर्षिसुमंत्रप्रेषणो. —*Sarga no.* ( figures, words or both ) : Ñ1 B1 D6 om. Ś1 16; Ñ2 B2.3 11; V1 12; Dg1 Dt1 Dd1 Dm1 S ( except T1 M4 ) 15; D1 63; D4.7 18; D5 21; M4 13 ( as in text ). —After colophon, D6 concludes with रामाय नमः; T2.3 श्रीरामचन्द्राय नमः; G M2 श्रीरामाय नमः.

## 14

☞ D3 missing for Sarga 14 ( cf. v.l. 2. 12. 12 ). Dm1 begins with ॐ.

1 B4 missing 1–$2^{b}$ ( cf. v.l. 2. 13. 14 ). —$^{a}$) T1 damaged for स तदन्तः ( cf. v.l. 2. 13. 28 ). —$^{c}$) Dg1 प्रविभक्तां ततः कक्षाम्. —For 1, Ś1 Ñ V1 B1–3 D1.2.4–7 M4 subst.:

307* जनौघवत्यः सोऽतीत्य षट्कक्ष्यास्तस्य वेश्मनः ।
प्रविभक्तां ततः कक्ष्यां सप्तमीमाससाद सः ।

[ (l. 1) Ñ1 B1–3 जनौघ( B1 °क [ sic ] )कीर्णाः( Ñ1 °र्णः ); V1 °पूर्णाः ( for जनौघवत्यः ). V1 सु- ( for षट् ). Ñ2 V1 B1–3 D4.5 कक्षास्. —(l. 2) Ñ2 B3 अविभक्तां; B1 प्रत्यासन्नां; D1 M4 प्रविविक्तां; D2 प्रविवेश ( for प्रविभक्तां ). D5 प्रविभक्तांतरां. Ś1 Ñ V1 B1–3 D1.2.4 कक्षां. Ś1 D2.4–7 ह; M4 ( before corr. ) यः ( for सः ). ]

2 B4 missing $2^{ab}$ ( cf. v.l. 1 ). —$^{d}$) Dg1 स्वनुरक्तैर्; Dt1 Dd1 स्वानुरक्तैर्. Dd1 Dm1 T3 M2 अधिष्ठितं ( for अधिष्ठिताम् ). —For 2, Ś1 Ñ V1 B1–3 D1.2.4–7 M4 subst., while B4 subst. l. 2 for $2^{cd}$ :

308* युवभिः पुरुषैर्गुप्तां प्रासकार्मुकधारिभिः ।
अप्रमादिभिरेकाग्रैर्भक्तिमद्भिरलंकृतैः ।

[ (l. 1) D5 युक्तां ( for गुप्तां ). V1 बाण- ( for प्रास- ). Ñ2 V1 B1–3 D1.2 M4 -पाणिभिः ( for -धारिभिः ). —(l. 2) M4 अलंकृतं ( for °कृतैः ). ]

3 $^{a}$) T1 damaged from णो वृद्धान् up to स्त्र्यध्यक्षान्सु in $^{d}$. Dd1 अत्र ( for तत्र ). —$^{c}$) Dm1 विष्ठितद् ( sic ); G1.2 M1 निष्ठितान्; M2 [ अ ]वस्थितान्. Dg1 द्वारे. —For 3, Ś1 Ñ V1 B D1.2.4–7 M4 subst. :

309* तथा कञ्चुकिभिर्वृद्धैः काषायाम्बरधारिभिः ।
रक्षितामनलंकारैः स्त्र्यध्यक्षैर्वेत्रपाणिभिः ।

[ (l. 1) M4 अथ ( for तथा ). Ś1 D6 शुद्धैः; V1 वृद्धैश्च ( hypm. ); M4 गुप्तां ( for वृद्धैः ). Ś1 Ñ1 V1 D2.5.6 कषायांबर-; D1 कायावरण- ( for काषायाम्बर- ). Ñ V1 B2–( B2.3 marg. also as above ) 4 M4 -वासिभिः ( for -धारिभिः ). —(l. 2) V1 रक्षितं सम° ( sic ); D1.2 रक्षितामनलंकारैः ( for the prior half ). D1 स्त्रीवेषैर्; M4 अध्यक्षैर् ( for स्त्र्यध्यक्षैर् ). ]

4 $^{a}$) D5 तं. T2 तमीक्ष्य ( for समीक्ष्य ). Ś1 Ñ V1 B D1.4–7 M4 ते दृष्ट्वैवा( D4.7 °ष्ट्वा चा )गतं सूतं( Ñ1 V1 B2 D1.4.5.7 दूतं ); D2 ते दृष्ट्वा ह्यागतं दूरं ( sic ). —After $4^{ab}$, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

310* सहसोत्पतिताः सर्वे ह्यासनेभ्यः ससंभ्रमाः ।
तानुवाच विनीतात्मा सूतपुत्रः प्रदक्षिणः ।
क्षिप्रमाख्यात रामाय सुमन्त्रो द्वारि तिष्ठति ।
ते राममुपसंगम्य भर्तुः प्रियचिकीर्षवः ।

[ (l. 1) T3 lacuna up to ष्ठति. G3 सहसोत्पातिताः. T2 स्वासनेभ्यः; M3 [ अ ]भ्यासनेभ्यः. Dt1 सुसंभ्रमाः; T3 च संभ्रमाः; G1.2 M1 ससंभ्रमं. —(l. 2) T1 damaged for नीता. —(l. 3) G2 आख्याय. G1 भद्रं वो ( for रामाय ). —T1 damaged from मन्त्रो up to र्षवः in l. 4. G2 सुतंत्रो; M3 सुदंतो ( for सुमन्त्रो ). —(l. 4) T2 G3 M3 उपसंक्रम्य. ]

—$^{c}$) Ś1 Dd1 Dm1 D6 T3 सभार्याय च; D2 भार्यया सह ( for सहभार्याय ). —$^{d}$) Ś1 D1.2.4–7 M4 समुपेत्य ( for क्षिप्रमेव ). Ñ V1 B प्रणिपत्य न्यवेदयन्.

G. 2. 13. 5
B. 2. 10. 7
L. 2. 17. 5

प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः ।
तत्रैवानाययामास राघवः प्रियकाम्यया ॥ ५
तं वैश्रवणसंकाशमुपविष्टं स्वलंकृतम् ।
ददर्श सूतः पर्यङ्के सौवर्णे सोत्तरच्छदे ॥ ६
वराहरुधिराभेण शुचिना च सुगन्धिना ।
अनुलिप्तं परार्ध्येन चन्दनेन परंतपम् ॥ ७
स्थितया पार्श्वतश्चापि वालव्यजनहस्तया ।
उपेतं सीतया भूयश्चित्रया शशिनं यथा ॥ ८
तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा ।
ववन्दे वरदं वन्दी विनयज्ञो विनीतवत् ॥ ९
प्राञ्जलिस्तु सुखं पृष्ट्वा विहारशयनासने ।
राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ॥ १०
कौसल्यासुप्रजा देव पिता त्वां द्रष्टुमिच्छति ।
महिष्या सह कैकेय्या गम्यतां तत्र माचिरम् ॥ ११
एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः ।
ततः संमानयामास सीतामिदमुवाच ह ॥ १२

---

5 $^{a}$) G2 M1 प्रतिचोदितम्; Cm.g.k.t प्रतिवेदितं (as in text). —$^{b}$) T1.2 अभ्यागतं; Cm.g.k.t as in text (for अभ्यन्तरं). —$^{c}$) T1 damaged for नाय. Dg1 [आ]नानयामास (sic). —$^{d}$) Dt1 M3 Cg राघवप्रिय°. ❀ Ct : प्रियकाम्यया पितुरिति शेषः । ❀ —For 5, Ś1 Ñ V1 B D1.2.4–7 M4 subst. :

311* श्रुत्वैवाभ्यागतं तं च सूतमभ्यर्हितं पितुः ।
रामः प्रवेशयामास सत्कृत्यालयमात्मनः ।

[ (l. 1) Ñ2 श्रुत्वैवास्वागतं (sic); D2 श्रुत्वा चाभ्यागतं. Ś1 V1 D4–7 M4 तं तु; B2 तत्र (for तं च). Ś1 Ñ1 D1.2.4–7 दूतम्. D2 अभ्यागतं; D5 M4 अभ्यर्चितं (for अभ्यर्हितं). —(l. 2) Ñ2 सद्यांतं (sic); D2 सत्कृत्वा (for सत्कृत्य). Ś1 D4–7 गृहम्; V1 स्वयम् (for [आ]लयम्). ]

6 T3 lacuna for $6^{abc}$. —$^{a}$) Ś1 Ñ V1 B D1.2.4.6.7 M4 स तं धन( Ñ2 B3 जल )द°; D5 स तु तं धर्म°. —T1 damaged from संकाश up to वर्णे सो in $^{d}$. —$^{cd}$) Ñ V1 B D1.2.4.5.7 M4 transp. पर्यङ्के and सौवर्णे. Ś1 Ñ1 B D1.2.4.6.7 M4 रांकवास्तृते( Ś1 D1.6 °श्रिते; B3 °चिते; D2 °सिते ); Ñ2 राङ्ववाचिते (sic); V1 om.; D5 (before corr. शंकवासुते ) सू° (for सोत्तरच्छदे ). T3 सुवर्णेनोत्तरच्छदे.

7 $^{a}$) D1.5 वराहै- (for वराह- ). Ś1 V1 B1.2.4 Dg1 T3 -रुधिराभेन; D1 M3 -रुचिराभेण( D1 °न ); Cg as in text (for °भेण ). —$^{b}$) Ś1 Ñ V1 B D1.2.4–7 M4 सु( B4 स्व )श्ल( D1 °श्लि [ sic ] )क्ष्णेन( Ś1 D5 सुश्लक्ष्णेण; V1 om.; B2 सुसूक्ष्मेन ) महाभुजं. —$^{cd}$) Dg1 Dd1 G2 परार्द्धेन; Cr.m.g.t °र्ध्येन (as in text). Ś1 Ñ V1 B D1.2.4–7 M4 महा( D1.2.5 वरा )र्हेण and सुगंधिना ( for परार्ध्येन and परंतपम् respy. ).

8 T1 damaged for पि वा in $8^{ab}$. —$^{b}$) Dm1 बाल-. —$^{d}$) T1 damaged from शशिनं up to $9^{b}$. —For 8, Ś1 Ñ V1 B D1.2.4–7 M4 subst. :

312* वालव्यजनधारिण्या सीतया पार्श्वसंस्थया ।
सपत्नया सेव्यमानं श्रियेव मधुसूदनम् ।

[ (l. 1) Ñ D1.4–7 बा( D5 [ before corr. ] व्या )ल-; M4 ताल- ( for वाल- ). D1.5 -पाणिभ्यां; D2.4.7 -पाणिन्या (sic) ( for -धारिण्या ). D6 ( before corr. ) सीतायाः. B1 पार्श्वं; B3 ( marg. also as above ) पार्व- ( sic ). —(l. 2) M4 अपत्नया. V1 व्यजमानं; D2 सेवमानं ( for सेव्यमानं ). D1 सुप्रिया सेव्यमानं तं ( for the prior half ). D6 मदसूदनं. ]

9 T1 damaged for $9^{ab}$ (cf. v.l. 8). —$^{b}$) M3 उपविष्टं (for °पन्नं ). Dg1 सुतेजसा. —$^{d}$) T3 विनुतज्ञो (for विनयज्ञो ). —For 9, Ś1 Ñ V1 B D4–7 M4 subst., while D1.2 subst. l. 2 for $9^{cd}$ :

313* तरुणादित्यसदृशं प्रज्वलन्तमिव श्रिया ।
ववन्दे राममभ्येत्य सुमन्त्रो विनयान्वितः ।

[ (l. 1) V1 B4 M4 -संकाशं ( for -सदृशं ). Ś1 D4.6.7 M4 उज्वलंतम्. D4 अधिश्रिया. —(l. 2) D1.5 M4 विनयानतः; D7 विस्मयान्वितः. ]

10 $^{a}$) Dg1 Dt1 Dd1 Dm1 सुमुखं दृष्ट्वा; T2 M2 तु सुखं स्पृष्ट्वा; T3 °दृष्ट्वा (for तु सुखं पृष्ट्वा ). Ś1 Ñ2 B1–3 D1.2.4.6.7 पृष्ट्वा( Ś1 B3 D2.6.7 दृष्ट्वा ) चैनं( D2 °वं ) सुखं( D4 °खैः ) प्रह्वो( B3 प्राह्वो [ sic ] ); Ñ1 दृष्ट्वा चैनं सुखं पृष्ट्वा; V1 पृष्ट्वा चैनं सुखं प्रश्नं; B4 M4 पृ( B4 स्पृ )ष्ट्वा चैनं सुखं प्राज्ञो; D5 दृष्ट्वा चैनं सुखासीनं. —$^{b}$) Ñ B1.3.4 Dd1 Dm1 D1.4.7 °नाशने; Cm °नासने (as in text). —$^{cd}$) Ś1 Ñ V1 B D1.2.4–7 M4 उवाचानंतरमिदं सुमंत्रो राजशासनात् ( Ñ V1 B °नं ).

11 $^{a}$) ❀ Cm : कौसल्या सुप्रजाः सुपुत्रेण त्वया... । Cg.k.t explain similarly. Cg also यद्वा कौसल्यायाः सुप्रजः सुपुत्र असिच्प्रत्ययान्तः । ❀ Ś1 Ñ B D1.2.4–7 G1 देवी( G1 °वि [ sic ] ); Dt1 Dd1 Dm1 T3 M4 राम; Ck as in text ( for देव ). V1 कौसल्यासुत जानीहि. —$^{b}$) Ś1 Ñ V1 B D1.2.4–7 M4 देवस( Ś1 D2 °व ) ( for पिता ). T1 damaged from मिच्छति up to क्त in $12^{a}$. —$^{c}$) Dt1 [अ]पि हि ( for सह ). Ś1 Ñ V1 B D1.2.4–7 M4 कैकेयी ( M4 °यि )सहितो राजा( Ñ B D1 राम; M4 तत्र ) गम्यतां यदि रोचते.

12 T1 damaged up to क्त in $^{a}$ (cf. v.l. 11). —$^{c}$) Dg1 स मानयामास. —For 12, Ś1 Ñ V1 B D1.2.4–7 M4 subst. :

देवि देवश्च देवी च समागम्य मदन्तरे ।
मन्त्रयेते ध्रुवं किंचिदभिषेचनसंहितम् ॥ १३
लक्षयित्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा ।
संचोदयति राजानं मदर्थं मदिरेक्षणा ॥ १४
यादृशी परिषत्तत्र तादृशो दूत आगतः ।
ध्रुवमद्यैव मां राजा यौवराज्येऽभिषेक्ष्यति ॥ १५
हन्त शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम् ।
सह त्वं परिवारेण सुखमास्स्व रमस्व च ॥ १६
पतिसंमानिता सीता भर्तारमसितेक्षणा ।
आद्वारमनुवव्राज मङ्गलान्यभिदध्युषी ॥ १७

G. 2. 13. 19
B. 2. 16. 21
L. 2. 17. 19

314* एवमुक्तः सुमन्त्रेण रामो राजीवलोचनः ।
शिरसा प्रतिगृह्याज्ञां पितुः सीतामथाब्रवीत् ।

[(l. 1) D6 राजविलोचनः (for राजीव°). —(l. 2) M4 राज्ञः (for पितुः). D4 यथा (for अथ).]

13 $^{ab}$) Ś1 reads श्च in marg. D2 om. second च (subm.). Dg1 तदंतरे; Cg मदंतरे (as in text). Ś1 Ñ V1 B D1.2.4–7 M4 सीते and परस्परं (for देवि and मदन्तरे respy.). —$^{c}$) Dg1 मंत्रयेत; Dm1 मंत्रयेति (both sic) (for °येते). —$^{d}$) T1.2 G3 Ck -संयुतं; Cr.g.t -सहितं; Cm as in text (for -संहितम्). —For 13$^{cd}$, Ś1 Ñ V1 B D1.2.4–7 M4 subst.:

315* मम मन्त्रयतो नूनं यौवराज्याभिषेचनम् ।

[Ś1 D4(after corr. *sec. m.*)–7 चिंतयतो; M4 [आ]-मंत्रयतो. D1 नित्यं (for नूनं). D1 यौवराज- (for यौवराज्य-).]

14 $^{a}$) T1 damaged from त्वा ह्य up to first म in $^{d}$. Dm1 G2 M1.2 तु (for हि). —$^{b}$) G2 सुदारुणा. —$^{d}$) Dg1 T G1.3 M2.3 Cg मदिरेक्षणे; Dt1 Dd1 Dm1 असितेक्षणा (for मदिरे°). —For 14, Ś1 Ñ V1 B D1.2.4–7 M4 subst.:

316* ध्रुवं मे यतते माता कैकेयी मत्प्रियेच्छया ।
अद्यैव मां यौवराज्यं प्रतिपादयितुं स्वयम् ।
नूनं रहसि राजानं मत्कृते त्वरयत्यसौ ।
अथवा सहिता राज्ञा मां प्रियं वक्तुमिच्छति ।

[(l. 1) B4 मेवतरे (sic) (for मे यतते). B1 सीता (sic) (for माता). D1.2.4.5.7 M4 ध्रुवं यतति(D2 तयति [metathesis]; M4 याचति) माता(D4 यातो [sic]) मे (for the prior half). Ñ1 केकेयी. B4 illeg. for प्रियेच्छ. D1.2.4.6.7 °त्प्रियेप्सया. —(l. 2) Ñ V1 B1.3 M4 ने (for मां). Ś1 D4.6.7 यौवराज्ये. D2 प्रतिपादयतु. M4 ध्रुवं (for स्वयम्). —(l. 3) Ñ1 B3 (also as above) यत्कृते (for मत्कृते). Ś1 D1.2.4–7 °त्वरयत्येव (D1 संत्वारयते [sic]; D2 त्वरयाप्येव; D4.7 त्वरयत्यति); M4 सा त्वारयति मत्कृते (for the post. half). —(l. 4) D1.2.5 प्रियं मां (by transp.); D4.7 प्रियं मे; M4 प्रियं मा (for मां प्रियं). B3 (also as above) बंधुम् (for वक्तुम्). B4 D4.7 अर्हति.]

—After 14, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.:

317* सा प्रहृष्टा महाराजं हितकामानुवर्तिनी ।
जननी चार्थकामा मे केकयाधिपतेः सुता ।
दिष्ट्या खलु महाराजो महिष्या प्रियया सह ।
सुमन्त्रं प्राहिणोद्दूतमर्थकामकरं मम ।

[(l. 4) Dg1 सुमंतं (for °मन्त्रं). T1 damaged from प्राहिणो up to दू in 15$^{b}$. Dg1 -कामपरं (for -कामकरं).]

15 T1 damaged up to दू in 15$^{b}$ (cf. v.l. 14). —$^{a}$) Ñ1 प**त् (for परिषत्). M4 यादृशं पश्यसे. Ś1 Ñ V1 B D1.2.4–7 M4 सीते (for तत्र). —$^{b}$) Ś1 Ñ V1 B D1.2.4(after corr. *sec. m.*)–7 M4 दूत(M4 सूत)श्चायं (V1 D2 °पि) यथा(Ñ2 B3.4 D2.4.7 तथा)विधः(B2 °गतः). —$^{c}$) Ś1 D4–7 M4 संप्रति (for अद्यैव). Ñ V1 B D1.2 राजा मां (by transp.). —$^{d}$) B1 [ऽ]भिषिक्ष्यति (sic); B3 [ऽ]भिषेक्ष्यते.

16 $^{a}$) G1 अहं. T2 शीघ्रगतो (sic) (for °मितो). —For 16$^{ab}$, Ś1 Ñ V1 B D1.2.4–7 M4 subst.:

318* तस्माच्छीघ्रमहं गत्वा पश्यामि जगतीपतिम् ।
एकं रहसि कैकेय्या सहासीनं गतज्वरम् ।

[(l. 2) Ñ1 D2 एवं रहसि; V1 एकान्तरणे; D6 एकं रहस्ये. Ñ1 केकेय्या. Ś1 D6 सुखासीनं; B2 reads सहासीनं in marg.]

—Ñ V1 B D1.2 M4 om. 16$^{cd}$. —$^{c}$) Ś1 D6 इह; D4.5.7 यथा (for सह). D4(after corr. *sec. m.*).5 परिचारेण; T3 परिवारैश्च.

17 $^{a}$) Ś1 D4–7 इति संमानिता. —$^{b}$) T1 damaged from सि in 17$^{b}$ up to राजा in l. 2 of 321*. Ś1 D4–7 भर्त्रा त्व(D4 स्व)सितलोचना. —$^{c}$) Ś1 D4–7 द्वारांतम्; G1 आत्मानम् (for आद्वारम्). D4 अनुप्रव्राज (sic). —$^{d}$) Dm1 मंगलान्; D4.5.7 मंगल्यानि (for मङ्गलानि). Ś1 (marg. also as in Dm1) D6 [अ]पि दध्युषी; Dg1 °दधुषी (both sic); Dd1 Dm1 °ध्रुषी; D5 °वादिनी; T2 °ध्युषे (sic); G1 [अ]धि° (for [अ]भिदध्युषी). —For 17, Ñ V1 B D1.2 M4 subst.:

319* इति भर्तृवचः श्रुत्वा सीता वचनमब्रवीत् ।
गच्छार्यपुत्र पितरं द्रष्टुं मातरमेव च ।
इत्युक्त्वा साञ्जलिं कृत्वा रामं संप्रस्थितं तदा ।
आद्वारमनुवव्राज सीता भर्तृवशानुगा ।;

[(l. 1) M4 राम- (for भर्तृ-). —(l. 2) B4 [आ]र्यपुत्र (sic); D1 [आ]र्ये भर्त(:) (for [आ]र्यपुत्र). B1 पितरम् (for मातरम्). —(l. 3) D1.2 M4 चांजलिं. D2 च (for सं-). —(l. 4) Ñ2 V1 B1–3 (B3 also as above) D1.2 आ द्वाराद्; B4 आत्मयाद् (sic); M4 अदूराद् (for आद्वारम्). D2 अनु*व्राज.]

—Then all cont.:

G. 2. 17. 21
B. 2. 20. 29
L. 2. 20. 20

चतुर्दश हि वर्षाणि वत्स्यामि विजने वने ।
मधुमूलफलैर्जीवन्हित्वा मुनिवदामिषम् ॥ १५
भरताय महाराजो यौवराज्यं प्रयच्छति ।
मां पुनर्दण्डकारण्यं विवासयति तापसम् ॥ १६
तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव ।
रामस्तूत्थापयामास मातरं गतचेतसम् ॥ १७
उपावृत्योत्थितां दीनां वडवामिव वाहिताम् ।
पांशुगुण्ठितसर्वाङ्गीं विममर्श च पाणिना ॥ १८
सा राघवमुपासीनमसुखार्ता सुखोचिता ।
उवाच पुरुषव्याघ्रमुपशृण्वति लक्ष्मणे ॥ १९
यदि पुत्र न जायेथा मम शोकाय राघव ।
न स्म दुःखमतो भूयः पश्येयमहमप्रजा ॥ २०

421* कैकेय्या भरतस्यार्थे राज्यं राजाभियाचितः ।
सत्येन परिगृह्यादौ तेन चास्यै प्रतिश्रुतम् ।

[ ( l. 2 ) Ñ1 चास्ये; M4 चास्याः. ]

On the other hand, Dg1 Dt1 Dd1 Dm1 T G2.3 M1–3 ins. :

422* गमिष्ये दण्डकारण्यं किमनेनासनेन मे ।
विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ।

[ ( l. 2 ) T2 विष्टराजिन-. ]

15 $^{a}$) M2 च ( for हि ). —$^{cd}$) Dt1 कंद- ( for मधु- ). Dd1 मुनि॰द्. D2.4.5.7 मधु( D2 कंद )मूलफलाहारस्तापसः पुत्रवत्सले. —For 15, Ś1 Ñ V1 B D1.6 M4 subst. and read after 16. :

423* सोऽहं वत्स्यामि वर्षाणि वने देवि चतुर्दश ।
स्वादूनि हित्वा भोज्यानि फलमूलकृताशनः ।

[ ( l. 1 ) V1 वर्षाणां. ]

16 $^{a}$) D2.4.5.7 भरतार्थे. —$^{b}$) Dg1 °राज्ये. Ś1 Ñ V1 B D1.6 M4 प्रदास्यति ( for प्रयच्छति ). D2.4.5.7 यौवराज्ये प्रचोदितः. —$^{cd}$) T1.2 G M1.2 -[ अ ]रण्ये. Ś1 Ñ V1 B D1.6 M4 मां पुनर्वनवासाय नियोजय( B1 °※ )ति सांप्रतं; D2.4.5.7 प्रतिगृह्य च( D2.5 तु ) कैकेय्या प्रथमं सुकृतेन च. —After 16, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

424* स षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने ।
आसेवमानो वन्यानि फलमूलैश्च वर्तयन् ।

[ ( l. 1 ) Dd1 Dm1 G2 M1.2 षडष्टौ ( for षट् चाष्टौ ). —( l. 2 ) Dm1 आसेव्यमानो. ]

—Dg1 Dt1 Dd1 Dm1 T G M1–3 cont.; D2.4.5.7 ins. after 16 :

425* सा निकृत्तेव सालस्य यष्टिः परशुना वने ।
पपात सहसा देवी देवतेव दिवश्च्युता ।

[ ( l. 1 ) Dg1 ( after corr. as above ) निकृष्टा; D2 निक्रंता ( sic ); D5 निकृत्य ( for निकृत्ता ). Dg1 D4.7 शालस्य. D4 ( before corr. ) वते, ( after corr. *sec. m.* ) वत ( both sic ) ( for वने ). —( l. 2 ) D2.4.5.7 श्रुत्वा ( for देवी ). D2.4.5.7 नभश्च्युता. ]

17 $^{a}$) D2.4.5.7 तु दुःखार्दितां ( for अदुःखोचितां ). D5 om. ( hapl. ) from दृष्ट्वा up to स्थितां in 18$^{a}$. —$^{b}$) Dt1 पपातितां ( sic ). D2.4.7 जननीं भृशं ( for कदलीमिव ). —$^{c}$) D2.4.7 om. तु. —$^{d}$) D2.4.7 शोकोपहतचेतनां. —For 17, Ś1 Ñ V1 B D1.6 M4 subst. :

426* इति रामवचः श्रुत्वा सा पपात तपस्विनी ।
कौसल्या दुःखसंतप्ता निकृत्ता कदली यथा ।
स तां निपतितां दृष्ट्वा भूमौ मातरमातुराम् ।
राम उत्थापयामास दुःखितां गतचेतनाम् ।

[ ( l. 3 ) D1 M4 तां ततः ( for स तां नि- ). D1 M4 transp. दृष्ट्वा and भूमौ. —( l. 4 ) Ñ1 तूत्थापयामास. M4 त्वरया ( for दुःखितां ). Ñ2 V1 D6 गतचेतसां. ]

18 $^{a}$) D5 om. up to स्थितां ( cf. v.l. 17 ). Ś1 Ñ B3 Dg1 Dd1 D2.4.6 G M उपावृत्य; B1.3 °वृत्त- ( for °वृत्य ). D1.4 स्थितां ( for [ उ ]स्थितां ). V1 देवीं ( for दीनां ). —$^{b}$) B3 वरटाम् ( for वडवाम् ). Ś1 Ñ V1 B D1.6 M4 विह्वलां; T3 पांसुलां; M3 वाहिताः ( sic ). —$^{cd}$) Dt1 Dd1 पांसु-. Dg1 Dm1 T G M1–3 -कुंठित-; D7 -गुवित- ( sic ) ( for -गुण्ठित- ). Dd1 -रूरवांगीं ( sic ). G2 विममर्शि ( sic ). D2.4.5.7 पाणिना विममार्ज ह ( for $^{d}$ ). Ś1 Ñ V1 B D1.6 M4 म( Ś1 B4 D6 M4 सं )मार्ज पाणिना रामः पांशु( Ś1 Ñ D6 M4 °सु )ना परिगुं( M4 °कुं )ठितां.

19 $^{a}$) T2 उपासीनाम् ( sic ). —$^{b}$) Dd1 असुखार्त-. Dm1( before corr. as in text ) सुखोचितां; M3 सुखोदिता. D2.4.5.7 अदुःखार्हं सुखोचितं. —For 19, Ś1 Ñ V1 B D1.6 M4 subst. :

427* अथ किंचित्समाश्वस्य कौसल्या दुःखमोहिता ।
उदीक्ष्य रामं प्रोवाच बाष्पगद्गदया गिरा ।

[ ( l. 1 ) Ñ1 V1 समाश्वास्य; B4 समासाद्य. —( l. 2 ) B4 उदीर्य रामं ( sic ); M4 उद्विग्नमाना ( for उदीक्ष्य रामं ). D1 -विह्वलया; M4 -संदिग्धया ( for -गद्गदया ). Ñ2 बाष्पगद्गदयानि च ( for the post. half ). ]

20 $^{a}$) D2.4.5.7 तावन् ( for पुत्र ). —$^{b}$) D2.4.5.7 °दुःखाय पुत्रक. —$^{c}$) D2.4.5.7 [ ए ]व( D2 °वं ); M2 [ अ ]स्मात् ( for स्म ). D4.7 अहं ( for अतो ). —$^{d}$) Dg1 ( before corr. ) Dt1 D2 G1.2 अप्रजाः ( sic ). —For 20, Ś1 Ñ V1 B D1.6 M4 subst. :

428* नैव राम यदि त्वं मे जायेथाः शोकवर्धनः ।
नैव चाहमिदं दुःखं प्राप्नुयां त्वद्वियोगजम् ।

एक एव हि वन्ध्यायाः शोको भवति मानसः ।
अप्रजास्मीति संतापो न ह्यन्यः पुत्र विद्यते ॥ २१
न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे ।
अपि पुत्रे विपश्येयमिति रामास्थितं मया ॥ २२
सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् ।
अहं श्रोष्ये सपत्नीनामवराणां वरा सती ।
अतो दुःखतरं किं नु प्रमदानां भविष्यति ॥ २३
त्वयि संनिहितेऽप्येवमहमासं निराकृता ।
किं पुनः प्रोषिते तात ध्रुवं मरणमेव मे ॥ २४
यो हि मां सेवते कश्चिदथ वाप्यनुवर्तते ।
कैकेय्याः पुत्रमन्वीक्ष्य स जनो नाभिभाषते ॥ २५

G. 2. 17. 33
B. 2. 20. 43
L. 2. 20. 32

[ (l. 1) V1 संदेवं (for यदि त्वं). V1 भापेथाः शोकवर्धनं (for the post. half). —(l. 2) Ś1 D6 transp. [ ए ]व and च. D1 M4 [ अ ]हमीदृशं (for चाहमिदं). B1 ᳵद्वियोगजं. ]

21 Ś1 om. (hapl.? see 428*) 21. —$^{a}$) Ñ V1 B D1.6 M4 एकम्. M2 भवति (for एव हि). D1 M4 वंध्यानां. —$^{b}$) D2.4.5.7 पुत्रक (for मानसः). Ñ V1 B D1.6 M4 दुःखं भवति पुत्रक. —B4 om. 21$^{cd}$. —$^{cd}$) D2.4.5.7 अपुत्रास्मीति. D1 मत्वाहं (for संतापो). T3 न ह्यन्यः संतापः (by transp.). D1 दृष्ट्वा पुत्रवियोगजं; D2.4.5.7 न हि दुःखं कुतो जरा (D5 ज्वरः) (for $^{d}$). Ñ V1 B1–3 D6 M4 अप्रजास्मीति न त्वा (V1 B2.3 M4 त्वी; D6 ता) दृगिष्टापत्य (V1 °ष्टपुत्र) वियोगजं. —After 21, D2.4.5.7 read 434*.

22 D2.4.5.7 om. 22. —$^{a}$) Ś1 Ñ V1 B D1 न प्राप्त-; G1 M2 अदृष्ट-; M4 अप्राप्त- (for न दृष्ट-). D1 -पूर्व-. D6 न प्राप्तं पूर्वकल्याणं. —$^{b}$) Dg1 शुभं (for सुखं). T1 पᳵ- (for पति-). Ś1 Ñ V1 B1–3 D1.6 M4 मया पतिपरिग्रहात्; B4 मया पत्युरनुग्रहात्. —$^{c}$) Dg1 M3 पुत्रे तु; Dd1 Dm1 G2.3 M1 Cv पुत्रेऽपि (for पुत्रे वि-). ❀ Cv : अपि पुत्रेऽपीति। एकोऽपि शब्दः पदार्थसंभावनायाम्। ❀ —$^{d}$) Dg1 G2 Cg.t स्थितं; T3 G1 M3 [ आ ]सितं; Cm as in text (for [ आ ]स्थितं). —For 22$^{cd}$, Ś1 Ñ V1 B D1.6 M4 subst. :

429* आशंसितं मे सुचिरं त्वत्तोऽपि प्राप्नुयामिति ।

[ D1 M4 आशासितं. Ś1 D6 आशंसितास्मि सुचिरं (for the prior half). B2 हि; D1 [ ऽ ]यं (for ऽपि). B4 प्राप्नुयाद् (sic). ] —Thereafter cont. :

430* तदद्य विफलीभूतं मम राम विचिन्तितम् ।
दुःखानामेव पुत्राहं विहितात्यन्तभागिनी ।

[ (l. 1) Ś1 विहलं जातं; D6 विफलं जातं (for विफलीभूतं). Ñ1 मन्ये (for मम). B2 reads राम in marg. B1 विचेष्टितं (for विचिन्तितम्). —(l. 2) Ś1 [ आ ]चंत- (for [ अ ]त्यन्त-). B1 (m. also) -भाविनी; B3.4 -भागिणी. ]

23 $^{a}$) Ś1 सु- (for सा). B4 बᳵनि. B4 [ अ ]वनोज्ञानि; D1 मनोज्ञानि (both sic) (for [ अ ]मनो°). D2 साहं बहूनि दुःखानि; D4 यावद्राम मनोज्ञानि; M4 साहं बहून्यनिष्टानि. —$^{b}$) Ś1 Ñ V1 B D1.2.4–7 M4 वाचश्च (Ñ2 °सु-; B3 °स्व-) हृदयच्छिदः. —After 23$^{ab}$, D2 ins. l. 2 (var.) of 435*. —$^{c}$) Ś1 Ñ V1 B D1.6 M4 सहिष्येहं (Ś1 D6 °ष्ये न) (for अहं श्रोष्ये). D2.4.5.7 कैकेय्याः प्रसहे (D2 प्रसभं; D1 सहसा; D7 प्रहसे [ metathesis ]) नित्यम्. —$^{d}$) B4 अवराणां वराणां (ditto.); D2.4.7 अवरा (D7 °दा [ sic ]) या; G3 अपराणां. Dt1 Dd1 Dm1 Ct परा; Cm.g.k as in text (for वरा). V1 वरणो मवरा सती (sic); D5 त्वयि राम वनं गते. —After 23$^{cd}$, D2.4.5.7 ins. l. 1 and 2 of 437*. —$^{e}$) Ś1 Ñ V1 B D1.6 इतो (for अतो). Ś1 Ñ V1 B D6 [ ऽ ]पि च (Ś1 D6 वै; V1 तद्; B2 वा) दुःखतरं; D1.2.4.5.7 M4 नु किं दुःखतरं (by transp.). —$^{f}$) T3 प्रमदाया (for °दानां). Ś1 Ñ V1 B D1.6 M4 मम राम भविष्यति. —After 23, Dg1 Dt1 Dd1 Dm1 D2.4.5.7 T G M1–3 ins. :

431* मम शोको विलापश्च यादृशोऽयमनन्तकः ।;

[ G2 M1.2 शोकविलापश्च. ]

while D1 M4 ins. :

432* आशावती यत्सहसा निराशाद्य त्वया कृता ।

[ M4 निराशास्मि. ]

24 V1 om. 24. —$^{a}$) B1 संनिहिᳵ. Ś1 Ñ B D1.2.4–7 M4 तावद् (for ऽप्येवम्). —$^{b}$) Ś1 Ñ B D1.6 M4 इयं मे राम (D1 पुत्र; M4 साधु) विक्रिया; D2.4.5.7 अहमेका ह्यकिंचना. —$^{c}$) G1 प्रेषिते (sic). D4.5.7 वत्स (for तात). Ś1 Ñ1 B D6 प्रोषिते तु त्वयि (Ś1 B1 त्वयि सु; B2.4 त्वयि तु) व्यक्तं; D1 M4 त्वयि तु प्रोषिते व्यक्तं; D2 त्वयि नु सेविते वत्स. —$^{d}$) Dt1 हि; T2 च; Cg as in text (for मे). Ś1 Ñ B D1.6 M4 नैव शक्ष्या (B1 शक्या; B4 सक्ष्या) मि जीवितुं; D2.4.5.7 वध एव ध्रुवो मम. —After 24, Dg1 Dt1 Dd1 Dm1 D2.4.5.7 T G M1–3 ins. :

433* अत्यन्तं निगृहीतास्मि भर्तुर्नित्यमसंमता ।
परिवारेण कैकेय्याः समा वाप्यथवावरा ।

[ (l. 1) Dt1 D2.5 T3 G1 M3 Cm अत्यंत-; T2 अत्यंता; Cg.k as above. D2.4.5.7 नि (D2.5 -नि) कृता ह्यस्मि (D5 °स्मिन्); T3 निग्रहीतास्मि. Dg1 Cg अतंद्रि (Cg °त्रि) ता; D4.7 असंगता (for असंमता). D5 नित्यसमं मता. —(l. 2) M3 पुरा (for [ अ ]वरा). Dm1 समाप्येपाथवावरा; G1 समवाप्यथवा वरः (sic?); Ctp समा वाप्यधरा वरा (for the post. half). D2.4.5.7 परिवादेन कैकेयी सर्वतो गुणवत्तरा. ]

25 $^{b}$) Dt1 अपि (for अथ). T2 -वर्तेति (sic). —$^{c}$) G1.2 M1 उद्वीक्ष्य; Cm.g.k as in text (for अन्वीक्ष्य).

G. 2. 17. 35
B. 2. 20. 45
L. 2. 20. 35

**दश सप्त च वर्षाणि तव जातस्य राघव ।**
**अतीतानि प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम् ॥ २६**

**उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः ।**
**दुःखं संवर्धितो मोघं त्वं हि दुर्गतया मया ॥ २७**

—$^{d}$) Dm1 ( before corr. ) सज्जनो; G3 जनको ( for स जनो ). —For 25, Ś1 Ñ V1 B D1.2.4–7 ( D2.4.5.7 read after 21 ) M4 subst. :

434* या हि मे प्रीयते काचित्सम्यक्च परिवर्तते ।
सर्वा एव तु ता द्वेष्टि कैकेयी वीक्ष्य मत्कृते ।

[ ( l. 1 ) Ś1 B4 D6 यदि; Ñ2 यो हि; D2.4.5.7 या च. Ś1 B1.2 D2.4–7 मां ( for मे ). Ś1 श्रयते; B1 प्रीतये( metathesis ) ( for प्रीयते ). D1 M4 यो हि मां भजते कश्चित् ( for the prior half ). Ś1 D6 न; B4 तु; D1 M4 वा; D2 मां ( for च ). D1 M4 [ अ ]प्यनुपश्यति; D4.5.7 मयि वर्तते. —After l. 1, D1 M4 ins. :

434( A )* सर्वं मद्भागधेयैर्न चिराद्राम विनश्यति ।
अन्तर्निरुद्धा दुःखार्ता सर्वकल्याणनाशिनी ।
दृष्टवत्यस्मि कैकेय्या परिभूता सुखच्युता ।
य एव मे हितान्वेषी कश्चिद्भवति राघव ।
स एव मम कैकेय्या प्रद्वेषाद्द्विष्यते जनः । [ 5 ]

[ ( l. 1 ) M4 सर्वः स मे भागधेयैरचिराद्राम नश्यति. —( l. 2 ) M4 -नाथिनी ( for -नाशिनी ). —( l. 3 ) M4 द्रष्टव्यास्मि च ( for दृष्टवत्यस्मि ). M4 ( *inf. lin. sec. m.* as above ) सुख- ( for परि- ). M4 ( *inf. lin. sec. m.* as above ) परि- ( for सुख- ). —( l. 4 ) M4 य एवमधिकान्वेषी ( for the prior half ). M4 पुत्रक ( for राघव ). —( l. 5 ) M4 राम ( for मम ). M4 प्रद्वेषो द्विष्यते मम ( for the post. half ). ]

—D1.7 ( hapl. ? ) M4 om. l. 2. —( l. 2 ) B2 ( m. ) वीक्ष्य; D2.4.5 पश्य. ]

—Thereafter Ś1 Ñ V1 B D1.6 M4 cont.; D2 ins. l. 2 after $23^{ab}$ :

435* साहं बहून्यनिष्टानि वाचश्च हृदयच्छिदः ।
सहिष्ये खलु कैकेय्यास्त्वयि राम वनं गते ।
तदसह्यमिदं दुःखं सोढुं पुत्रक नोत्सहे ।
अद्यैव मरणं मेऽस्तु को वार्थो जीवितेन मे ।

[ B4 om. l. 1. —( l. 1 )=$23^{ab}$ ( var. ). D1 दुःखानि ( for [ अ ]निष्टानि ). —( l. 2 ) B4 इष्टे वयसि; D1.2 M4 सं( M4 न )सहिष्यामि ( for सहिष्ये खलु ). —( l. 3 ) Ś1 D6 अहं; M4 चिरं ( for इदं ). D1 सहे सुचिरं दुःखं ( for the prior half ). —( l. 4 ) D1 नैव ( for को वा ). V1 त्वयि राम वनं गते ( for the post. half ). ]

On the other hand, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. after 25 :

436* नित्यक्रोधतया तस्याः कथं नु खरवादि तत् ।
कैकेय्या वदनं द्रष्टुं पुत्र शक्ष्यामि दुर्गता ।

[ ( l. 1 ) G3 नित्यं. M3 °क्रोधितया. Dt1 Dd1 Dm1 T3 Cm.k.t ख( Dm1 स्वै )रवादिनं( T3 °वद् [ sic ] ); M3 खरवामि तत् ( sic ); Cg as above. ✿ Cm : लिङ्गव्यत्ययः आर्षः । खरवादिनामिति पाठः । ✿ —( l. 2 ) T2 वचनं ( for वदनं ). Dg1 द्रक्ष्यामि ( sic ) ( for शक्ष्यामि ). T2 दुर्गतं. ]

26 $^{a}$) Ś1 Ñ V1 B D1.6 M4 अद्य जातस्य वर्षाणि; D2.4.5.7 सप्तविंशतिरद्येह( D2 °विद्याह [ sic ]; D4 om. from रद्येह up to दुःखैः सं in $27^{c}$ ). —$^{b}$) Dt1 Dd1 Dm1 transp. तव and जातस्य. Dg1 पुत्रक; D2.5.7 मे समाः ( for राघव ). Ś1 Ñ V1 B D1.6 दश चाष्टौ च तेनघ( V1 ते वयः; B4 तेन मे ); M4 दशाष्टादश चैव ते. —$^{c}$) Dg1 Dm1 T1.2 M2.3 Cm.g आसिता( नि; G1 आस्थि°; G3 आसीत्ता°; Ck अती° ( as in text ). Ś1 Ñ B D6 क्षपितानीह कांक्षंत्या; V1 समतीतानि जानीमः; D1 M4 यान्यासितानि कांक्षंत्या( M4 कैकेय्या ); D2.5.7 क्षपिताः कांक्षमाणायास्. —$^{d}$ ) Ś1 Ñ B D2.5–7 त्वत्तो; V1 प्रायो; Dg1 मम ( for मया ). D1 -क्षये; M4 -क्षयात्. —After 26, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.; D2.4.5.7 ins. l. 1 and 2 only after $23^{cd}$ :

437* तदक्षयं महद्दुःखं नोत्सहे सहितुं चिरम् ।
विप्रकारं सपत्नीनामेवं जीर्णापि राघव ।
अपश्यन्ती तव मुखं परिपूर्णशशिप्रभम् ।
कृपणा वर्तयिष्यामि कथं कृपणजीविकाम् ।

[ ( l. 1 ) G2 ※द् ( for तद् ). D2.4.5.7 तमत्यय( D5 तदत्यंत ) मह( D4 °※ )द्धं च ( for the prior half ). Dt1 चिरात्. —( l. 2 ) D2.4.5.7 अपि ( for एवं ). D4.7 वृद्धा; D5 जीर्णं ( for जीर्णा ). D2.5 च ( for [ अ ]पि. ) —( l. 3 ) G1 प्रति- ( for परि- ). Dm1 -पूर्णं ( for -पूर्ण- ). —( l. 4 ) T1.2 G M2 Ct -जीविका; Cm.g °कां ( as above ). ]

27 D4 om. up to दुःखैः सं in $^{c}$ ( cf. v.l. 26 ). —$^{ab}$ ) D2.5.7 प्रयत्नैश्च ( for च योगैश्च ). D2.5.7 पराक्रमैः ( for परिश्रमैः ). Ś1 Ñ V1 B D1.6( in marg. from वासै up to श्चोप in l. 1 of 438* )M4 नियमैरुपवासैश्च कर्षयंत्या कलेवरं —$^{cd}$ ) B2.4 Dt1 Dd1 Dm1 D1.6 T2.3 G1.2 M1–3 दुःख-; M4 दुःखात्; Cm.k.t दुःखं ( as in text ). Ś1 Ñ V1 B D1.6 M4 राम ( for मोघं ). Ś1 Ñ V1 B D1.6 M4 मया दुःखितया ( V1 °※※ ) ह्यसि ( for $^{d}$ ). D2.4.5.7 दुःखैः सं( D4 om. up to सं )वर्धितस्तात कथं मामवहास्यसि( D2 [ ditto. ]°ववहास्यतिः D5 °ति ). —After 27, D1 wrongly repeats 26 as in D2. —After 27, Ś1 Ñ V1 B D1.6 M4 ins. :

438* नियमाश्चोपवासाश्च ये मया त्वत्कृते कृताः ।
ते मेऽद्य विफलीभूता वनं संप्रस्थिते त्वयि ।

[ ( l. 1 ) D6 reads नियमाश्चोप in marg. V1 त्वत्कृते ये मया ( by transp. ). —( l. 2 ) Ñ1 D1 transp. मे and ऽद्य. Ś1 D6 त एते विफला जाता ( for the prior half ). B1 मयि ( for त्वयि ). ]

स्थिरं तु हृदयं मन्ये ममेदं यन्न दीर्यते ।
प्रावृषीव महानद्याः स्पृष्टं कूलं नवाम्भसा ॥ २८

ममैव नूनं मरणं न विद्यते
न चावकाशोऽस्ति यमक्षये मम ।
यदन्तकोऽद्यैव न मां जिहीर्षति
प्रसह्य सिंहो रुदतीं मृगीमिव ॥ २९

स्थिरं हि नूनं हृदयं ममायसं
न भिद्यते यद्भुवि नावदीर्यते ।
अनेन दुःखेन च देहमर्पितं
ध्रुवं ह्यकाले मरणं न विद्यते ॥ ३०

इदं तु दुःखं यदनर्थकानि मे
व्रतानि दानानि च संयमाश्च हि ।
तपश्च तप्तं यदपत्यकारणा-
त्सुनिष्फलं बीजमिवोप्तमूषरे ॥ ३१

यदि ह्यकाले मरणं स्वयेच्छया
लभेत कश्चिद्गुरुदुःखकर्शितः ।
गताहमद्यैव परेतसंसदं
विना त्वया धेनुरिवात्मजेन वै ॥ ३२

G. 2. 17. 40
B. 2. 20. 53
L. 2. 20. 40

28 D2.4.5.7 om. 28. —$^{a}$) Dt1 Dm1 नु; Dd1 Cr.m.g हि ( for तु ). —$^{b}$) Dg1 [ इ ]यं ( for [ इ ]दं ). G1 किं ( for यन् ). —$^{d}$ ) T3 M2 इव ( for नव- ). —For 28, Ś1 Ñ V1 B D1.6 M4 subst. :

439* दुःखौघेन परिक्लिष्टं हृदयं सीदतीव मे ।
दुर्बलं विपरिक्लिन्नं नदीकूलमिवाम्भसा ।

[ ( l. 1 ) Ñ2 V1 B3 -क्लिन्नं ( for -क्लिष्टं ). B1.2.4 D1 M4 दुःखौघविपरिक्लिन्नं( M4 °ष्टं ) ( for the prior half ). M4 om. ( hapl. ) the post. half of l. 1 and prior half of l. 2. B3 [ इ ]ह ( for [ इ ]व ). —( l. 2 ) V1 दुर्वचन- ( for दुर्बलं वि- ). Ś1 D6 -क्लिष्टं ( for -क्लिन्नं ). B4 D1 M4 नद्याः ( for नदी- ). B2 M4 -तीरम् ( for -कूलम् ). ]

29 D2.4.5.7 transp. 29 and 31. —$^{a}$) Ñ1 प्रशस्तं ( for न विद्यते ). —$^{b}$ ) D4.5.7 मम ( for न च ). D2 [ अ ]** शो. Dg1 [ ऽ ]स्तु; D2 न ( for ऽस्ति ). Ś1 B1 D6 मम ( for यम- ). Ś1 Ñ V1 B D6 क्वचित् ; T1.2 [ ऽ ]पि वा ( for मम ). D2.4.5.7 न( D2 च ) वा यमक्षये ( for यमक्षये मम ). —After $29^{ab}$, D1 ins. :

440* याजीति राम विनया कृता त्वया । ( sic )

—D1 om. $29^{cd}$. B1 transp. $29^{c}$ and $29^{d}$. —$^{c}$ ) T1 यदंतकोप्येव; T3 यदंतरोद्यैव ( sic ). Ś1 D6 प्रधर्षते; Ñ V1 B M4 प्रकर्षति( M4 °ते ); D2.4.5.7 जिघांसति ( for जिहीर्षति ). —$^{d}$ ) D2.4.5.7 द्र( D2 द्रु )वतीं ( for रुदतीं ). Ś1 D6 गृहीतशोकास्मि निगृह्य जीवितं; Ñ V1 B प्रसह्य( Ñ B3 [ m. also ] °गृह्य; V1 °सज्य; B4 °वृद्ध ) शोकाश( V1 °ग्नि; B2-4 °सि ) निकृत्तजीवितां. —After 29, Ś1 Ñ V1 D6 M4 read $32^{ab}$ followed by 441*.

30 B reads 30 after 442*. —$^{a}$ ) Ś1 Ñ V1 B D1.6 इदं च; D2.4.5.7 स्थिरं तु; M4 इदं हि. D2.4.5.7 मन्ये ( for नूनं ). Ś1 Ñ V1 B2.3 D6 सु( Ñ2 स्व )संह( V1 °ग )तं; B1.4 सुसंभृ( B4 °स्तु )तं; D2 ममा**; D4.5.7 ममाद्य; M3 ममाय*. —$^{b}$ ) T1.2 विद्यते; Cr.m.g.t as in text ( for भिद्यते ). Dt1 M2 नो विदीर्यते; Dd1 Dm1 T3 नाविदीर्यते. Ś1 Ñ V1 B D1.6 M4 ममायसं( D1 M4 सुसंहतं ) यच्छतधा न( M4 वि ) दीर्य( Ñ2 B3 [ orig. ] शीर्य; D1 °य )ते; D2.4.7 निर्भि( D2 ** )द्यते यद्भुवि नापि शीर्यते; D5 °द्भहुनापि शीर्यते. —$^{c}$ ) Dg1 दुःखेखे ( sic ). D2.4.7 तु( D2 च ) यद्ध्रिये त्वहं( D2 च* ); D5 तु यद्धरास्म्यहं; G3 °र्दितं ( for च देहमर्पितं ). Ś1 Ñ V1 B D6 त्वयैव मुक्ता( Ś1 D6 °क्ते ) च न यन्( Ś1 D6 °तदा; Ñ1 damaged for च न यन् )मृता ह्य( Ñ1 * )हं( Ś1 °यं [ sic ] ); D1 त्वयैव मुक्ता च हता मृताप्यहं; M4 त्वयैव मुक्ता न मृता च यद्यहं. —$^{d}$ ) Dt1 ध्रुवं स्वकाले; D2.4.5.7 ह्यदेशकाले; Ct as in text ( for ध्रुवं ह्यकाले ). Ś1 Ñ V1 B D1.6 M4 ध्रुवं हि मृत्युर्मम नै ( B1 से [ sic ] )व विद्यते.

31 D2.4.5.7 transp. 29 and 31. —$^{a}$ ) T1.2 G3 हि; Cm.g as in text ( for तु ). D2.4.5.7 अनर्थकं मम; T2 अनर्थकारि मे. —$^{b}$ ) D2 चीर्णानि ( for दानानि ). D2.4.5.7 वाक्च( D4 °कु [ sic ] ) संमता( D5 संयमः, यमः being in m. ); G2 M1.2 संयमाश्च ( for °श्च हि ). —$^{c}$ ) D2 एपश्च ( sic ) ( for तपश्च ). T3 अवश्य- ( for अपत्य- ). Dt1 Dd1 Dm1 -काम्यया ( for -कारणात् ). —For 31, Ś1 Ñ V1 B ( reads after 33 ) D1.6 M4 subst. :

441* इदं तु ते दुःखमतीव यन्मया
सुदुश्चरं तप्तमनर्थकं तपः ।
प्रसादिता यच्च कृताशया मया
निरर्थकं पुत्र सुरद्विजर्षभाः ।

[ ( l. 1 ) B1.3 पुनर् ; B2 M4 °मे ( for तु ते ). B4 wrongly repeats मया. V1 इदं च दुःखं दहतीव यन्मया. —( l. 2 ) Ś1 D6 सुदुष्करं दुःखम् ; D1 M4 सुदुस्तरं चीर्णम् ( for सुदुश्चरं तप्तम् ). Ś1 D6 तु यः ( for तपः ). —( l. 3 ) V1 प्रमादिता ( sic ); D1 प्रसासादिता ( by ditto. ). Ś1 D6 ये ( for यच्च ). M4 मया निराशया. —( l. 4 ) D1 निररर्थकं ( by ditto. ); M4 निरर्थका. B3 तत्तु; D1 M4 राम ( for पुत्र ). Ś1 D6 हृदि प्रहर्षती; Ñ2 °द्विजर्षभात् ( sic ? ); D1 द्विजाः सुरर्षभाः. ]

32 D1 om. 32. Ś1 Ñ V1 D6 M4 read $32^{ab}$ followed by 441* after 29 ( cf. v.l. 29 ). —$^{a}$ ) D2.4.5.7 तु ( for

G. 2. 17. 43
B. 2. 20. 55
L. 2. 20. 43

भृशमसुखममर्षिता तदा
बहु विललाप समीक्ष्य राघवम् ।
व्यसनमुपनिशाम्य सा मह-
त्सुतमिव बद्धमवेक्ष्य किंनरी ॥ ३३

इति श्रीरामायणे अयोध्याकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

हि ). Ñ2 B3 [ अ ]कालं ( for [ अ ]काले ). V1 यद्द्य काले. D7 म*णं. Ñ B3 यथेच्छतो( B3 °ति ); V1 B4 निजेच्छया; B1 ( m. also ) त्वये°; B2 स्वके°; Dt1 Dd1 Dm1 यद्द°; D2.4.7 नरेश्वरस; D5 यदि° ( for स्वयेच्छया ). —[b] ) Ś1 D6 लभेय; B4 लभेह ( sic ); G2 *भेत. Ś1 Ñ V1 B D5.6 M4 बहु- ( for गुरु- ). Ś1 D6 -दु:खित:( D6 °ता ); Ñ1 V1 B1.3.4 Dg1 Dd1 Dm1 -कर्षित: ( sic ) ( for -कर्शित: ). D2.4.7 त्वदर्थमार्यो लभते कदाचन. —[c] ) Dm1 ( after corr. m. as in text ) D7 यता; D5 गंता ( for गता ). T3 गतामद्य ( metathesis ). D2.5 परामिहापदं; D4.7 परेतसंपदा ( for परेतसंसदं ). —[d] ) T3 [ आ ]त्मना ( for त्वया ). D4.7 [ आ ]तुरात्मजा( D7 °ज ) ( for [ आ ]त्मजेन वै ). —For 32[cd], Ś1 Ñ V1 B ( followed by 30 ) D6 M4 subst.:

442* भवेयमद्यैव विजीविता ध्रुवं
सुदु:खिता राम विनाकृता त्वया ।

[ ( l. 1 ) Ś1 V1 D6 M4 स( V1 मि [ sic ]; M4 कु ) जीविता. D6 दृढं ( for ध्रुवं ). —( l. 2 ) M4 विजीविता ( for सुदु:खिता ). M4 transp. कृता and त्वया. ]

—After 32, Dg1 Dt1 Dd1 Dm1 S( except M4 ) ins.:

443* अथापि किं जीवितमद्य मे वृथा
त्वया विना चन्द्रनिभाननप्रभ ।
अनुव्रजिष्यामि वनं त्वयैव गौ:
सुदुर्बला वत्समिवानुकाङ्क्षया ।

[ ( l. 2 ) M2 transp. त्वया and विना. Dt1 °प्रभा ( sic ); T2 चंद्र**ननप्रभ; M2 °निभाननेन. —( l. 4 ) M3 सुदुर्दला ( sic ). Dt1 Dd1 Dm1 T3 G1 M3 Cm.t [ अ ]भिकां( T3 °ल )क्षया; Cg.k ( as above ). ]

33 [a] ) M4 *inf. lin. sec. m.* सु in असुखम् . D1 अवाप्य यत् ( for अमर्षिता ). Dt1 Dd1 Dm1 यदा; D2 तदानीं ( for तदा ). Ś1 Ñ1 V1 B1.2.4 D6 M4 अवाप्य तत्तु( B1 M4 तत्र ) सा( V1 * ); Ñ2 B3 समवा( B3 °* )प्य तच्च सा( Ñ2 m. तच्च सा ) ( for अमर्षिता तदा ). G2 भृमश( metathesis )सुख* मर्षि**दा. —[b] ) D2 °वं च; D4.7 नरेंद्रपत्नी ( for समीक्ष्य राघवम् ). Ś1 Ñ V1 B D1.6 M4 नृप( Ñ2 marg. )महि ( B1 °* )षी विललाप दु:खिता. —[c] ) Dt1 Dm1 T2 -निशम्य; Cm -निशाम्य ( as in text ). ❀ Ct : महद्व्यसनं दु:खं निशाम्य। ❀ Ś1 Ñ V1 B D1.2.4–7 M4 व्यसनिनमभि( Ś1 D6 °मिव )वीक्ष्य राघवं( B3 °वं स्वं; D5 °वं सा ). —[d] ) V1 B1 सुतं सुतम् ( by ditto. ). Ś1 केसरी; D2 सुरभीव ( unmetrical ); D4.7 सौरभी; D5 सौरभेयी ( for किंनरी ). —After 33, B reads 441*.

Colophon —*Sarga name* : Ś1 Ñ V1 B D1.2.4–7 कौसल्याविलाप:( Ñ2 m. विला ). —*Sarga no.* ( figures, words or both ) : Ñ1 B1.4 D6 om. Ś1 Dg1 Dt1 Dd1 Dm1 D2 T G M1–3 20; Ñ2 B2.3 16; V1 M4 18; D1 73; D4.7 22; D5 25. —After colophon, D6 concludes with रामाय नम: । श्रीन:; T2 श्रीरामचन्द्राय परब्रह्मणे नम:; G M1.3 श्रीरामाय नम:.

१८

तथा तु विलपन्तीं तां कौसल्यां राममातरम् ।
उवाच लक्ष्मणो दीनस्तत्कालसदृशं वचः ॥ १
न रोचते ममाप्येतदार्ये यद्राघवो वनम् ।
त्यक्त्वा राज्यश्रियं गच्छेत्स्त्रिया वाक्यवशं गतः ॥ २
विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः ।
नृपः किमिव न ब्रूयाच्चोद्यमानः समन्मथः ॥ ३
नास्यापराधं पश्यामि नापि दोषं तथाविधम् ।
येन निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४
न तं पश्याम्यहं लोके परोक्षमपि यो नरः ।
अमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् ॥ ५
देवकल्पमृजुं दान्तं रिपूणामपि वत्सलम् ।
अवेक्षमाणः को धर्मं त्यजेत्पुत्रमकारणात् ॥ ६

G. 2. 18. 8
B. 2. 21. 6
L. 2. 21. 6

## 18

☞ D3 missing for Sarga 18 (cf. v.l. 2. 12. 12). —Before 1, Ś1 Ñ V1 B D1.2.5.6 M4 ins. :

444* पुनरेव तु दुःखार्ता कौसल्या राममब्रवीत् ।
न श्रोतव्यं त्वया राम पितुः कामवतो वचः ।
इहैव वस किं तेऽसौ राजा वृद्धः करिष्यति ।
न गन्तव्यं त्वया वत्स जीवन्तीं मां यदीच्छसि ।

[(l. 1) Ś1 D6 M4 सु-; B1 D2 च; D5 सा (for तु). B2 transp. दुःखार्ता and कौसल्या. D1 कौशिल्या. B4 वाक्यम् (for रामम्). —(l. 2) D1.2.5 पुत्र (for राम). M4 कामान्वितं (for कामवतो). —(l. 3) B2 त्वं (for [ए]व). B3 तिष्ठ; D2 त्वां स (for वस). M4 च (for ते). Ñ इहैव वसतः किं ते (for the prior half). D1.2.5 वृद्धो राजा (by transp.). —(l. 4) B1 राम; D5 M4 पुत्र (for वत्स). B3 मा (for मां).]

Dm1 begins with ॐ.

1 $^{a}$) Dg1 Dd1 तदा; Cg तथा (as in text). D5 [अ]पि (for तु). Ś1 Ñ V1 B D1.6 M4 तथा (B2 अथ) तामातुरां (V1 च मातरं) दृष्ट्वा. —$^{b}$) D1 कौशिल्यां राम-. —$^{c}$) Ś1 Ñ V1 B D1.6 M4 श्रीमांस् (for दीनस्).

2 $^{a}$) Ñ1 ममाप्यद्य; B1 Dm1 (after corr. as in text) मयाप्येतद्; Dt1 समाप्येतद् (sic); D2.4.5.7 मम ह्येतद्. —$^{b}$) Ś1 D6 यदार्ये (by transp.); Ñ1 (with hiatus) V1 B1.2 (after corr. as in text).4 D1.2.4.7 आर्यो यद्; M4 अंब यद् (for आर्ये यद्). —$^{c}$) Ñ V1 B राज्यमितो; M2.3 राजश्रियं. —$^{d}$) Ś1 D6 वृद्ध-; D4.7 स्त्रियो (for स्त्रिया). Ñ B D1 M4 स्त्रीवाक्येन (B2 [gloss] कैकेयीवाक्येन) प्र (D1 M4 °क्य प्रति) चो (D1 नो) दितः; V1 स्त्रीवाक्यप्रचोदितः (subm.).

3 $^{a}$) Ñ V1 B D1 M4 विपरीतम (D1 °ग) तिर्वृद्धः. —$^{b}$) Ñ V1 B D1.5 M4 स्त्रीजितः काम (B3 [also] °ल) लालसः (B4 मानसः). —$^{c}$) Ñ V1 B D1 M4 राजा (for नृपः). Ñ1 B1 Dm1 इति; Ñ2 इह; V1 किं तु; Dg1 अपि (for इव). D1 नो. —$^{d}$) D2 नोद्यमानः. Ñ V1 B D1 M4 कैकेय्या वशमागतः.

4 Ś1 D6 om. 4 and 5. —$^{c}$) D5 निर्वास्यति. Dg1 राज्याद्. —For 4, Ñ V1 B D1 M4 subst. :

445* नापराधं हि पश्यामि न दोषमणुमप्यहम् ।
रामस्य येन राज्ञायं राष्ट्रान्निर्वास्यते वनम् ।

[(l. 1) Ñ2 नापराधं च; V1 अपराधं न. V1 दोषमनुपम् [sic]; D1 दोषगुणम्. B4 [अ]यं (for [अ]हम्). —(l. 2) Ñ B3 रामस्तु. B3 (also as above) मे न (for येन). Ñ1 [अ]थ; B3 यद्; M4 हि (for [अ]यं). V1 रामोयं राज्ञा (for राज्ञायं राष्ट्रान्).]

—After 4, Dg1 G2.3 M1 Ck ins.; G1 ins. after 5 :

446* अद्य वृद्धं हनिष्यामि दुर्गं कामवशं गतम् ।
स्त्रिया युक्तं सुनिर्लज्जं धर्मायुक्तं नृपं तथा ।

[(l. 1) Dg1 Ck अहं हनिष्ये पितरं (for the prior half). Dg1 वृद्धं (for दुर्गं). —(l. 2) G1 सुनिर्लज्जा (sic). Dg1 स्त्रीयुक्तं च विनिर्लज्जं (for the prior half). Dg1 मदयुक्तं; G1.3 संगयुक्तं; Ck धर्मा° (as above). G2 यथा.]

5 Ś1 D6 om. 5 (cf. v.l. 4). —$^{a}$) D2.4.5.7 च (for तं). —$^{c}$) Dg1 Dt1 Dd1 Dm1 T G2.3 M1.3 Cr.m.g.t स्वमित्रो; G1 स्वामिना; M2 स्वामित्रो. G1 वा; G2 [ऽ]सि (for the second ऽपि). D2.4.7 पित्रापि हि निरस्तस्य; D5 अमित्रो हि नरस्तस्य. —$^{d}$) D2 उदावहेत्; M3 उपाहरेत्; Cr.g उदाहरेत् (as in text). —For 5, Ñ V1 B D1 M4 subst. :

447* न च पश्यामि तं लोके योऽस्य दोषमुदाहरेत् ।
अमित्रोऽप्यनतिस्निग्धो निरमित्रस्य धीमतः ।

[(l. 1) M4 हि (for च). Ñ2 B3 M4 उपाहरेत्.

—After l. 1, B3 ins. :

447(A)* तत्कथं त्यज्यते पुत्रो ज्येष्ठः सर्वगुणाकरः ।

—(l. 2) Ñ2 V1 B2-4 हि; D1 [ऽ]थ (for ऽपि). V1 [अ]*तिस्निग्धो; B3 (also) [अ]नभिस्निग्धो; D1 न चास्निग्धो. Ñ1 निरमित्रस्य च (hypm.); D1 नरमित्रस्य.]

—After 5, G1 ins. 446*.

6 $^{a}$) Ś1 Ñ V1 B D1.6 M4 देवसत्त्वं. Ś1 Ñ V1 B2.4 D4-7 M4 मृदुं दां (Ś1 शां) तं; B1 सुदं (sic) दांतं; B3 D1 सु (B3 [also] D1 मृ) दुर्दांतं; M2 ऋतं दांतं. —$^{b}$) D1 इव (for अपि). —$^{c}$) Ś1 V1 B2.4 Dd1 Dm1 D1.2.4.7 M3 अवेक्ष्यमाणः; Dt1 अवेक्षमाणाः; T1 damaged for अ; Ct °णः (as in text) (for अवेक्षमाणः). ❀ Ck : अधर्मं अधर्म-

G. 2. 18. 9
B. 2. 21. 7
L. 2. 21. 7

तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः ।
पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ७
यावदेव न जानाति कश्चिदर्थमिमं नरः ।
तावदेव मया सार्धमात्मस्थं कुरु शासनम् ॥ ८
मया पार्श्वे सधनुषा तव गुप्तस्य राघव ।
कः समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ ९
निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ ।
करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ १०
भरतस्याथ पक्ष्यो वा यो वास्य हितमिच्छति ।
सर्वानेतान्वधिष्यामि मृदुर्हि परिभूयते ॥ ११

---

विग्रहम् । ❋ —$^d$ ) Ś1 Ñ2 V1 B D6 अकारणं; Dg1 D2.4.5.7 G1.2 M1.2.4 °णे; Cg °णात् ( as in text ).

7 $^a$ ) D2.4.7 अस्य ( for इदं ). —$^c$ ) D2.4.5.7 कः कुर्याच्छासनं वीरो. —$^d$ ) M3 राजधर्मम्. —For 7, Ś1 Ñ V1 B D1.6 M4 subst.; D5 subst. l. 1 only for $7^{ab}$ :

448* पुनर्बालस्य वृद्धस्य स्त्रीजितस्य विशेषतः ।
कः कुर्याद्वचनं तस्य राजधर्मार्थविद्बुधः ।

[ ( l. 1 ) Ñ2 यत्वा ( sic ) बालस्य; B3 ( also as above ) यद्बालकस्य; B4 पुनरालस्य ( sic ). D5 पुनर्बाल्यश्च वृद्धश्च स्त्रीजितश्च विशेषतः. —( l. 2 ) D1 M4 राज्ञो ( for तस्य ). B4 -धर्मस्य ( for -धर्मार्थ- ). Ñ2 -विद्विषः. V1 राज्ञो धर्मा❋विद्बुधः ( for the post. half ). ]

8 $^b$ ) कश्चिद्. D1 नृपः; D7 जनः ( for नरः ). —$^d$ ) Ñ B3 काकुत्स्थ ( for आत्मस्थं ). D1 M4 शासनं कुरु ( by transp. ). ❋ Ck : आत्मसंस्थं कुरु त्वदाज्ञामेव राज्ये प्रवर्तय । ❋ —After 8, D5 ins. 449*.

9 $^a$ ) Dg1 पार्श्वेन; T1 पा❋स ( damaged ); G1 पार्श्वेषु ( for पार्श्वे स- ). —$^b$ ) D2.4.5.7 transp. तव and गुप्तस्य. —$^c$ ) D2.4.5.7 सुखं द्रष्टुं; T1.2 M1 [ ऽ ]प्रियं°; Cr.m.g.k as in text ( for ऽधिकं कर्तुं ). —$^d$ ) D4 [ ए ]व ( for [ इ ]व ). —For 9, Ś1 Ñ V1 B D1.6 M4 subst.; while D5 ins. after 8 :

449* भृत्ये ते मयि पार्श्वस्थे राज्यावाप्त्यर्थमुद्यते ।
यौवराज्याभिषेकस्य विघातं कः करिष्यति ।

[ ( l. 1 ) Ñ1 मयि च; V1 हि मयि; B1 तु मयि ( for ते मयि ). Ś1 D6 राज्यकार्यार्थम्; B1 राज्यप्राप्त्यर्थम्; D1 रावणो वार्थम् ; D5 त्वयि राज्यार्थम् ( for राज्यावाप्त्यर्थम् ). —( l. 2 ) B4 यौवराज्ये. D1.5 M4 -[ अ ]भिषेकेस्मिन्. B1 कं ( sic ). ]

10 $^a$ ) T1.2 G3 कृत्स्नाम् ( for सर्वाम् ). —$^b$ ) D2.4.5.7 G2.3 M1 पुरुषर्षभ. —$^d$ ) T3 तिष्ठति ( for स्थास्यति ). D2.4.5.7 विग्रहे. —For 10, Ś1 Ñ V1 B D1.6 M4 subst. :

450* निर्मनुष्यामयोध्यां हि कुर्यां राम शितैः शरैः ।

[ D1 तु ( for हि ). B2 कुर्याद्रामः. Ś1 शतैः. B1 om. शरैः. ]

11 $^a$ ) G3 भरतस्यापि. Dg1 T2.3 G1.3 M2 पक्षो वा; D2.4.5.7 वा पक्षे; Cm.g.t as in text ( for पक्ष्यो वा ). —$^b$ ) Dg1 [ अ ]थ; M2 [ अ ]पि; Cm.t as in text ( for [ अ ]स्य ). D5 हंतुम्; G2.3 [ अ ]हितम् ( for हितम् ). —$^c$ ) Dt1 Dd1 Dm1 सर्वांस्तांश्च; D3 सर्वमेव; D4.5 सर्वमद्य; D7 सर्वं स❋ ( for सर्वानेतान् ). D2.4.5.7 G2 हनिष्यामि. —$^d$ ) T3 वा ( for हि ). T2 परिभू❋ते ( moth-eaten ). —For 11, Ś1 Ñ V1 B D6 M4 subst. :

451* यौवराज्यविघातं ते यः कुर्वीत नृपाज्ञया ।
भरतस्यापि वा पक्षं यो गृह्णीयादचेतनः ।
तं पापमहमद्यैव प्रेषयिष्यामि यमक्षयम् ।

[ ( l. 1 ) Ś1 Ñ2 D6 यौवराज्ये. Ñ1 -[ अ ]विघातं; V1 -[ अ ]भिघातं. Ś1 D6 कः ( for यः ). M4 यौवराज्याभिषेकस्ते न क्रियेत नृपाज्ञया. —( l. 2 ) V1 भरतस्य च. Ñ2 B3 वाक्यं; B4 पक्ष्यं ( for पक्षं ). —( l. 3 ) Post. half hypm. D1 प्रेपयेयं; M4 प्रेपयिष्ये. D6 यमालयं. ]

and then cont.; while D1.5 ( l. 1–2 only ) ins. after 11 :

452* नायमद्य क्षमाकालस्तेजो दर्शय राघव ।
क्षमी ह्येकरसो राम लोकेन परिभूयते ।
कैकेय्या नियतं राजा भेदितोऽद्य भविष्यति ।
त्वया तस्य विभिन्नस्य श्रोतव्यं न कथंचन ।
कं हि धर्मं समाश्रित्य त्वामसौ त्यक्तुमिच्छति । [5]

[ Ñ1 om. l. 1 —( l. 1 ) Ś1 D6 नायमन्यक्तिकालस्ते ( for the prior half. ). —( l. 2 ) V1 क्षमास्तेकरसो ( sic ); M4 after corr. *inf. lin. sec. m.* as above. D1.5 M4 वी( D1 धी )र ( for राम ). B2 ( m. also ) यः क्षमैकरसो राम ( for the prior half ). Ñ2 B3 लोके च; B1 लोकेपि; B2 ( m. also ) लोके स. D5 लोको लोकपते किल ( for the post. half ). —After l. 2, D5 ins. 454*. —( l. 3 ) D6 कैकेया. V1 निसुतं ( sic ) ( for नियतं ). M4 भवेद् ध्रुवं ( for भविष्यति ). —( l. 4 ) D1 M4 transp. त्वया and तस्य. D1 M4 न श्रोतव्यं ( by transp. ). B4 कदाचन. —( l. 5 ) Ś1 D6 च ( for हि ). B3 ( also as above ) किं धर्मं समाश्रित्य; D1 M4 कारणं हि( D1 किं ) स( M4 कि )मुद्दिश्य ( for the prior half ). B3 ( also ) त्वा नरस ( for त्वामसौ ). Ñ2 B3 D1 अर्हति( D1 °सि [ sic ] ) ( for इच्छति ). ]

—D1 M4 cont. ( further ) :

453* त्वां त्यक्त्वा भरतं चापि कथं राजानमिच्छति ।

—After 11, Dg1 Dt1 Dd1 Dm1 D2.4.5( after l. 2 of 452* ).7 T G M1–3 ins. :

454* प्रोत्साहितोऽयं कैकेय्या संतुष्टो यदि नः पिता ।
अमित्रभूतो निःसङ्गं बध्यतां बध्यतामपि ।
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।

त्वया चैव मया चैव कृत्वा वैरमनुत्तमम् ।
कास्य शक्तिः श्रियं दातुं भरतायारिशासन ॥ १२
अनुरक्तोऽस्मि भावेन भ्रातरं देवि तत्त्वतः ।
सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १३
दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति ।
प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥ १४
हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः ।
देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १५
एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः ।
उवाच रामं कौसल्या रुदन्ती शोकलालसा ॥ १६
भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया ।
यदत्रानन्तरं तत्त्वं कुरुष्व यदि रोचते ॥ १७
न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् ।
विहाय शोकसंतप्तां गन्तुमर्हसि मामितः ॥ १८

G. 2. 18. 23
B. 2. 21. 22
L. 2. 21. 21

---

उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ।
बलमेष किमाश्रित्य हेतुं वा पुरुषोत्तम । [5]
दातुमिच्छति कैकेय्यै राज्यं स्थितमिदं त्वया ।

[ (l. 1) M2 प्रोत्सारितस. D2 [ऽ]पि; D4.5.7 हि; M2 तु (for स्यं). Dd1 Dm1 D4.5.7 M1.2 स( D4.5 सं) दुष्टे; T G1.3 सुदु( T1.2 °तु)ष्टे; G2 स तुष्टे; M3 संदिष्टे; Ct संतुष्टे (as above). —(l. 2) G2 -भूषो (for -भूतो). Dg1 reads from संगं up to मपि in marg. Dg1 निःशंकं; D4.7 निःसंगः. Dg1 T G M1.2 वध्यतां बध्यतान् (by transp.). M3 (after corr. *sec. m.* as above) इति (for अपि). D2.4.5.7 कार्यमारभ( D4.7 °प्सस्य; D5 °रम्य )ते त( D2.5 य )दा (for the post. half). —D2.4.5.7 om. l. 3 and 4. —(l. 4) Dm1 (before corr. as above) M3 उत्पथ-; Cm.g °थं (as above). —(l. 5) M2 बलद्वेष (sic). D2 हंतुं; D5 दातुं (for हेतुं). —(l. 6) Dg1 T3 G1.2 राज्यं स्फीतम्; Dt1 Ct उपस्थितम्; G3 राज्य° (for राज्यं स्थितम्). Dd1 Dm1 राज्यमेतदुपस्थितं (for the post. half). D2.4.5.7 प्रयच्छेद्भरतायेदं राज्यं निहतकंटकं. ]

12 $^{ab}$) D2 साह्ममयं; D5 सार्धं मया (for चैव मया). Ś1 Ñ V1 B D1.6 M4 विग्रहोयं कृतोनेन( V1 °तस्तेन ) त्वया सह मयैव( Ñ2 B3 °यापि ) च. —$^{c}$) Ś1 Ñ1 V1 B4 D2.4-7 (D5 after corr. as in text) कस्य (for कास्य). D2.4.5.7 महीं (for श्रियं). Dg1 को हि शक्तः प्रियं दातुं. —$^{d}$) Ś1 Ñ B D1.6 M4 बलादिव; V1 om.; Dg1 [अ]रिसूदन; T3 [अ]विनाशन (sic); M2.3 [अ]रिनाशन. D2.4.5.7 आत्मछं( D5 [before corr.] °छे )देन राघव.

13 $^{b}$) Dm1 दैवि; M1 देव (for देवि). —$^{c}$) Dm1 [ए]तद् (for [ए]व). —$^{d}$) D4.7 दत्तेष्टेन च. —For 13, Ś1 Ñ V1 B D1.6 M4 subst. and read after 456*:

455* सर्वभावानुरक्तोऽस्मि रामं भ्रातरमग्रजम् ।
आयुधं तेन सत्येन पादौ चैवालभे तव ।

[ (l. 1) D1.6 राम. —(l. 2) Ś1 D6 न्यायवृत्तेन; V1 आयुरंतेन (for आयुधं तेन). D1 M4 [आ]लभामि ते. ]

14 $^{b}$) D2.5 प्रविश्यति. —$^{d}$) T1.2 G2 M1 उपधारय( M1 °चक्रमे also in marg.); G3 अभिधारय. D2.4.5.7 पूर्वमेवो (D5 °वा)पधारय. —For 14, Ś1 Ñ V1 B D1.6 M4 subst. and read before 455*:

456* प्रविवक्षति रामोऽयं यदि दीप्तं हुताशनम् ।
पूर्वमेव ततो देवि प्रविष्टं विद्धि मामपि ।

[ (l. 1) V1 आः प्रवेक्ष्यति; D1 प्रतिवक्षति (sic). —(l. 2) B1 इति (for अपि). Ś1 D6 उपधारय (for विद्धि मामपि). ]

15 $^{a}$) D2.4.5.7 दुःखं वीर्यात् (by transp.; D2.4 °र्या [sic]). —$^{c}$) Dg1 Dt1 D2.4.5.7 M3 देवि. D2.4.5.7 पश्यत्व; M3 पश्यति. —For 15, Ś1 Ñ V1 B D1.6 M4 subst.:

457* अद्य पश्यन्तु मे वीर्यं सर्वशो युधि मानवाः ।
रामाज्ञया दुःखशल्यमयमद्योद्धरामि ते ।

[ (l. 1) D1 सर्वतो (for सर्वशो.). D1 M4 भुवि (for युधि). —(l. 2) Ś1 B4 D1.6 अहम्; B1( *inf. lin.*; also as above).3 (also) इमन् (for अयम्). ]

—After 15, Dt1 Dd1 Dm1 T2 G M1.2 Ck ins.:

458* हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम् ।
कृपणं चास्थिरं बालं वृद्धभावेन गर्हितम् ।

[ (l. 1) G2 वृद्धा (sic). G2 -[आ]सक्तमुक्तं (for -[आ]सक्तमानसम्). G1 M2 कैकेय्या वशमागतं (for the post. half). —(l. 2) Dt1 Dd1 च स्थितं (for चास्थिरं). Dt1 Dd1 Dm1 बाल्ये. Dm1 मोहितं (for गर्हितम्). ]

16 $^{a}$) Ś1 Ñ V1 B D1.6 M4 इत्येतद्; D2 एतत्सु-; D4 एवं तु (for एतत्तु). —T3 om. (hapl.) from श्रुत्वा in 16$^{a}$ up to वचः in 18$^{a}$. —$^{d}$) Dg1 Dt1 Dd1 Dm1 D4.5 M2 रुदती. D2.4.5.7 -विह्वला (for -लालसा). Ś1 Ñ V1 B D1.6 M4 दुःखशोकपरिप्लुता.

17 T3 om. 17 (cf. v.l. 16). —$^{a}$) Ś1 Ñ V1 B D1.6 M4 वचनं राम; M3 वचनं पुत्र (for वदतः पुत्र). —$^{b}$) D2.4.5.7 वचः श्रुतं( D4.7 शुभं ) (for श्रुतं त्वया). Ś1 Ñ V1 B D1.6 M4 श्रुतं भक्तिमतो( Ś1 D6 °युतं ) हितं. —$^{c}$) D5 तद् (for यद्). D2.4.5.7 G2.3 M1 Ck कार्यम्; Cv.m as in text (for तत्त्वं). Ś1 Ñ V1 B D1.6 M4 एतदेव विमृश्या( D1 °शा )शु. —$^{d}$) Ś1 Ñ V1 B D1.6 M4 क्रियतां( M4 °ते ); D2.4.5.7 आतिष्ठ (for कुरुष्व).

18 T3 om. up to वचः in $^{a}$ (cf. v.l. 16). —$^{a}$) Dm1 न चाधर्म्य-; D2.4.5.7 अधर्मिष्ठं( D2 °कं [sic] ) (for न चाधर्म्यं). —$^{b}$) D2 मास (sic) (for मम). —$^{c}$) D2 शो*-

G. 2. 18. 23
B. 2. 21. 23
L. 2. 21. 21

धर्मज्ञ यदि धर्मिष्ठो धर्मं चरितुमिच्छसि ।
शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमम् ॥ १९
शुश्रूषुर्जननीं पुत्र स्वगृहे नियतो वसन् ।
परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥ २०
यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम् ।
त्वां नाहमनुजानामि न गन्तव्यमितो वनम् ॥ २१
त्वद्वियोगान्न मे कार्यं जीवितेन सुखेन वा ।
त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २२
यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम् ।
अहं प्रायमिहासिष्ये न हि शक्ष्यामि जीवितुम् ॥ २३
ततस्त्वं प्राप्स्यसे पुत्र निरयं लोकविश्रुतम् ।
ब्रह्महत्यामिवाधर्मात्समुद्रः सरितां पतिः ॥ २४

---

( for शोक- ). —$^{d}$ ) D2.4.5.7 T2 G2 M1.3 मा( D2.4.7 न; D5 M3 मां ) वनं गंतुमर्ह( D5 °मिच्छ )सि. ꙮ Ck : मां विहाय वनं गन्तुं नार्हसि । ꙮ —For 18, Ś1 Ñ V1 B D1.6 M4 subst ; D5 ins. only l. 2 after 18 :

459* न मे सपत्न्या वचनाद्वनं गन्तुमितोऽर्हसि ।
शोकपावकसंतप्तां मां विमुच्यारिकर्षण ।

[ ( l. 1 ) Ñ1 B1.3 D1 इहार्हसि; V1 त्वमर्हसि. —( l. 2 ) B1 शोके. Ñ1 -पाव*-. B1.2.4 D5 M4 उत्सृज्य; D1 उद्धृत्वा ( sic ) ( for विमुच्य ). Ś1 D6 [ अ ]रिधर्षण; B4 विकर्षण. ]

19 D5 repeats 19$^{ab}$ after 460*. —$^{a}$ ) Ś1 Ñ V1 B D6 धर्मं च; D7 सर्वज्ञ; M2 धर्मज्ञो. K and B( eds. ) इति ( for यदि ). Ś1 D6 धर्मात्मन् ; Ñ V1 B धर्मज्ञ ( Ñ2 °ज्ञः ); Dg1 Dt1 Dd1 Dm1 D2.4.5( second time ).7 T3 G1.2 M1-3 धर्मिष्ठ; D1.5( first time ) M4 धर्मं( D5 °र्मे ) त्वं( D1 त्वां ); Cm as in text ( for धर्मिष्ठो ). —$^{b}$ ) G3 damaged for मिच्छतु. Ś1 Ñ V1 B D1.5( first time ).6 M4 पौ( Ś1 D6 M4 पु )राण( D5 °णा )मनुवर्तसे( D5 °ते ). —D1 M4 ( hapl. ) om. 19$^{cd}$. —$^{c}$ ) Ś1 D6 शुश्रूषुर् ; Ñ V1 B ( B1 m. also ) D2.5.7 शुश्रूषन् ; D4 शुश्रूषु ( sic ). Ś1 B3 ( also ) D6 च ( for त्वं ). —$^{d}$ ) Ñ1 धर्म*र; Dg1 नरधर्मम् ( for चर धर्मम् ). V1 अनुत्त*म् . —After 19, Ś1 Ñ V1 B D6 ins.; while D1.5 M4 ins. after 19$^{ab}$ ( D1 M4 owing to om. ) :

460* ततो ममापि वचनं धर्म्यं कर्तुमिहार्हसि ।
पुरा मातुर्नियोगाद्धि शक्रः परपुरंजयः ।
भ्रातॄञ्जवान सापत्न्यात्राज्यं चाप दिवौकसाम् ।

[ Ś1 Ñ V1 B D6 om. l. 1. —( l. 1 ) D5 धर्मं कर्तुमितोर्हसि ( for the post. half ). —( l. 2 ) B1 तु ( for हि ). D1.5 M4 मातुर्वि( M4 °र्नि )योगाद्धि पुरा ( for the prior half ). —( l. 3 ) Ś1 D6 सापत्न्याद् ; Ñ2 B1-3 D1.5 सापत्नान्. B4 उद्यं ( sic ) ( for राज्यं ). Ñ V1 B2 D1.5 चापि; M4 प्राप्तो ( for चाप ). ]

—Thereafter D5 repeats 19$^{ab}$.

20 $^{a}$ ) Ñ V1 B1-3 D2.5 शुश्रूषन् ; B4 D4.7 G3 शुश्रूष. Ś1 D6 M3 ( before corr. ) तत्र; Dd1 Dm1 D5 पुत्रः ( for पुत्र ). —$^{b}$ ) D2.5.7 निर( D2 °य )तोपि सन् ( for नियतो वसन् ). —$^{d}$ ) B1.3 Dt1 D2.4.5.7 कश्यपस् . —For 20, D1 M4 subst. :

461* तथैव का( D1 क )श्यपेनापि मातुः कृत्वा प्रियं वचः ।
यशो लोके महत्प्राप्तं स्वर्गलोकश्च शाश्वतः ।

21 B2 reads 21$^{ab}$ in marg. —$^{a}$ ) D2 यथैवं. B1 D2 राज्य- ( for राजा ). G2 पूज्यस् ( sic ). —$^{b}$ ) Dg1 G2 [ अ ]पि; T1.2 [ अ ]स्मि ( for हि ). Ś1 Ñ V1 B D2.4-7 तथाहमपि पुत्रक; D1 M4 तथैवाहम( M4 °हं न )संशयः. —$^{c}$ ) Dg1 त्वामहम् ; D2.4.5.7 अहं त्वाम् ; T2 त्वां साहम् ( for त्वां नाहम् ). Ś1 D6 त्वया ममापि वचनात् ; Ñ V1 B D1 M4 म( D1 स )मान्यतस्ते( B1 °तील्य ) वचनात्( B1 °नं ).

22 G1 om. 22-23$^{ab}$. —$^{ab}$ ) D5 च ( for वा ). Ś1 Ñ V1 B D1.6 M4 न चैव त्व( B1 त )द्विहीनाहं जीवेयमिति मे मतिः( Ñ1 damaged for मतिः ). —After 22$^{ab}$, Ś1 Ñ V1 B D1.6 M4 ins. :

462* मामुपेक्ष्य च राम त्वं न वनं गन्तुमर्हसि ।
गन्तव्यं यदि चावश्यं मयैव सहितो व्रज ।

[ ( l. 1 ) D6 अपेक्ष्य. Ñ B3 ममाप्यपेक्षया राम; V1 B1.2.4 D1 M4 मदपेक्ष्यापि( M4 °हि ) राम त्वं ( hypm. ) ( for the prior half ). V1 वनं गंतुं न चार्हसि ( for the post. half ). —( l. 2 ) V1 B2.4 D1 M4 वा ( for च ). Ñ2 V1 B3 [ अ ]रण्यं ( for [ अ ]वश्यं ). ]

—$^{c}$ ) Ñ V1 B2-4 D1 M4 हि मे सह; B1 हि सह मच् ( for सह मम ).

23 G1 om. 23$^{ab}$ ( cf. v.l. 22 ). —$^{ab}$ ) D2.4.5.7 यदि यास्यस्य( D2 °श्र [ hypm. ] )ण्यं त्वं ( for $^{a}$ ). D4.7 transp. त्यक्त्वा and मां. M3 om. मां ( subm. ). Ś1 Ñ V1 B D1.6 M4 यदि वा मां( Ś1 D6 मां सं; M4 त्वं मां )परित्यज्य वनं यास्यसि राघव. —D2 om. ( hapl. ? cf. 23$^{cd}$ in D4 ) 23$^{cd}$. —$^{c}$ ) Dg1 Dt1 Dm1 T2 [ आ ]शिष्ये. Ś1 Ñ V1 B D1.6 M4 ततोहं प्रायमाशि( Ś1 V1 D6 M4 °सि )ष्ये; D4.5.7 ततः प्रायमु( D4 °उ )पाशि( D5 °सि )ष्ये; M3 तदाहं प्रायमासिष्ये. —$^{d}$ ) Dt1 Dd1 Dm1 च; M4 [ अ ]हं ( for हि ). V1 शक्नोमि; B3 ( m. also ) D6 शक्यामि; D1 शिष्यामि ( both sic ); T2 वक्ष्यामि.

24 $^{ab}$ ) D2.4.7 ततः प्राप्स्यस्यधर्मं त्वमतुलं धर्मवत्सल. —For 24$^{ab}$, Ś1 Ñ V1 B D1.5.6 M4 subst. :

463* मातृहा निरयं घोरं तेनावाप्स्यसि कल्मषम् ।

[ Ś1 मातृहानिमयं; Ñ2 °हानिमयं; B3 °हानिरियं. Ś1 त्वमेवाप्स्यसि; V1 D1.5( after corr. as above ).6 तेन वाप्स्यसि. Ñ V1 B3 किल्बिषं; D1 शाश्वतं; D5 कर्मणा; M4 कल्मषी ( for कल्मषम् ). ]

विलपन्तीं तथा दीनां कौसल्यां जननीं ततः ।
उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ २५
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥ २६
ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा ।
गौर्हता जानता धर्मं कण्डुनापि विपश्चिता ॥ २७
अस्माकं च कुले पूर्वं सगरस्याज्ञया पितुः ।
खनद्भिः सागरैर्भूमिमवाप्तः सुमहान्वधः ॥ २८
जामदग्न्येन रामेण रेणुका जननी स्वयम् ।
कृत्ता परशुनारण्ये पितुर्वचनकारिणा ॥ २९

G. 2. 18. 36
B. 2. 21. 33
L. 2. 21. 35

—Ś1 D6 om. $24^{cd}$.—$^{c}$) M3 [ अ ]धर्म्यात्. Ñ V1 B D1.2.4.5.7 M4 व्र( M4 [ before corr. ] व्रा )ह्मशा( B4 °पा )प ( Ñ1 व्रह्मज्ञाना )मि( D1 °दि )वाकस्मात् .—After 24, D1 ( l. 1 only ).2.4.5.7 ins. :

464* गुरोरप्यधिका माता धर्मज्ञाः कथयन्ति हि ।
कुरु मे वचनं पुत्र मा पितुः परचेतसः ।

[ ( l. 1 ) D5.7 अभ्यधिका. D2.7 ह ( for हि ). ]

25 $^{a}$) Dg1 तदानीं तां; D1 यथा दीनां ( for तथा दीनां ). M4 इत्येवं विलपंतीं तां.—$^{b}$) Ś1 D6 शोकमूर्छितां; Ñ V1 B दुःखमूर्छितां; D1 M4 शोककर्शितां.—$^{d}$) B4 धर्मसंहतिः. —After 25, Ś1 D2.4–7 ins. :

465* किमेतद्देवि धर्मज्ञे स्नेहविक्लवया त्वया ।
भाषितं स्मर धर्मं त्वमात्मानं स्वकुलं तथा ।
भर्तारं परमोदारं ततो मातः प्रशाधि माम् ।
जानतोऽपि हि मातॄणां दुःखं पुत्रप्रवासजम् ।

[ ( l. 2 ) D4( before corr. as above ) पाहि ( for स्मर ). —( l. 3 ) D7 तमो ( sic ) ( for ततो ).—( l. 4 ) D2 *जनस्यापि; D4.7 जानन्नपि हि; D5 जानंतस्यापि ( sic ) ( for जानतोऽपि हि ). D2 lacuna for प्र; D4 -प्रवासनं ( for -प्रवासजम् ). ]

26 $^{a}$) Dt1 *स्ति; G1 कास्ति; Ct as in text ( for नास्ति ). G3 प्रियं ( for पितुर् ).—$^{b}$) Ś1 D2.4–7 प्रतिकूलयितुं. —$^{c}$) Ś1 D6 T3 M3 त्वा.—$^{d}$) Ñ V1 B D1 M4 गमिष्ये वचनात्पितुः.—After 26, Ś1 Ñ V1 B D6 M4 read $30^{ab}$ ( 471* ); D1( along with 471* ).2.4.5.7 read 30 and then 29 ( cf. v.l. 29 ).

27 D5 om. ( hapl. ) $27^{ab}$.—$^{a}$) D1.2.4.7 G2 M1 [ अ ]पि ( for च ).—$^{b}$) Dg1 Dt1 D1.2.4.7 G3 M2 वनचारिणा. —$^{cd}$) D1 कण्वेन; D4 केनापि; D5 कंडुना ( for कण्डुना ). Dg1 M3 transp. जानता and कंडुना. Dt1 Dd1 Dm1 D4( m. ) T1.3 च; D2 [ अ ]त्ति- ; G1 M3 हि ( for [ अ ]पि ).—For 27, Ś1 Ñ V1 B D6 M4 subst. :

466* कण्डुना चापि सिद्धेन वनाश्रमनिवासिना ।
महर्षिणा गौर्विशस्ता तथैव पितुराज्ञया ।

[ ( l. 1 ) V1 कंतुनाम्ना; B4 कश्ना च; D6 क( before corr. का )न्युना च ( for कण्डुना च ). B1 [ अ ]पि च ( by transp. ). D6 वृद्धेन ( for सिद्धेन ). Ñ V1 B3 वनवास-; B2 वनाश्रय- ( for वनाश्रम- ). B4 -निवासिनः ( sic ).—( l. 2 ) V1 damaged; B2 ( m. also ) महर्षीणां ( for महर्षिणा ). ]

28 D5 repeats $28^{ab}$ as in D2 after 469*.—$^{a}$) Dt1 Dd1 Dm1 D4.7 तु ( for च ). D2.4.7 कृतं पूर्वैः ( for कुले पूर्वं ).—$^{b}$) D2.4.7 पितुर्वचः ( for [ आ ]ज्ञया पितुः ). —D2.4.7 om. $28^{cd}$.—$^{c}$) M2 सागरं पूर्वम् ( for सागरैर्भूमिम् ).—$^{d}$) Dd1 Dm1 संप्राप्तः; Cm as in text ( for अवाप्तः ).—For 28, Ś1 Ñ V1 B D1.5.6 M4 subst. :

467* अस्माकं पूर्वकैश्चापि खनद्भिः पितुराज्ञया ।
भूतलं सगरापत्यैर्महान्सत्त्ववधः कृतः ।

[ Ś1 V1 ( both hapl.; cf. 463* ) D1 om. l. 1.—( l. 1 ) Ñ1 पूर्वजैश्च. B3 ( also as above ) खनितं ( for खनद्भिः ). —( l. 2 ) Ś1 Ñ1 B1 भूतले. D1 सगरात्मजैर्भूमितलं ( hypm. ); D5 सागरैरात्मजैर्भूमिर्; M4 सगरस्यात्मजैर्भूमिं ( for the prior half ). Ś1 B2 D5 महा- ( for महान् ). ]

—Ś1 Ñ V1 B D1.5.6 M4 cont.; D7 ins. after $28^{ab}$ :

468* तदेतन्न मयैकेन क्रियते पितृशासनम् ।

[ D1.5 M4 तदेवं ( for तदेतन् ). D7 °देवि मा शुचः ( for the post. half ). ]

—D1.5 cont. further :

469* प्रायशश्च नृभिः सद्भिर्गतो मार्गोऽनुगम्यते ।

—Thereafter D5 repeats $28^{ab}$ ( as in D2 ).

29 Ś1 Ñ V1 B D6 M4 transp. 29 and $30^{ab}$ ( including 471* ); D1.2.4.5.7 transp. 29 and 30 and both the groups read them after 26.—$^{a}$) B4 यामदग्नेन; Dt1 Dd1 T2 जामदग्नेन; D4 जामदग्नेन. D2 reads from ण up to कारिणा in $^{d}$ in marg.—$^{b}$) Ś1 Ñ V1 B D6 M4 जनन्याः किल धीमता.—$^{cd}$) Dg1 कृंता; D1.5 कृत्वा; D2 हता; Cm as in text ( for कृत्ता ). Dg1 Dt1 D4.7 G3 M1.3 -कारणात्. Ś1 Ñ V1 B D6 M4 शिरश्छिन्नं परशुना क्रुद्धस्य पितुराज्ञया.—After 29, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

470* एतैरन्यैश्च बहुभिर्देवि देवसमैः कृतम् ।
पितुर्वचनमक्लीबं करिष्यामि पितुर्हितम् ।

[ ( l. 1 ) Dt1 Dm1 T3 दिवि ( for देवि ).—( l. 2 ) Dm1 आक्लीबं. ]

G. 2. 18. 38
B. 2. 21. 35
L. 2. 21. 38

न खल्वेतन्मयैकेन क्रियते पितृशासनम् ।
पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३०
तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा ।
पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥ ३१
तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत् ।
तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् ।
अभिप्रायमविज्ञाय सत्यस्य च शमस्य च ॥ ३२

30 Ś1 Ñ V1 B D6 M4 transp. 29 and $30^{ab}$ (including 471*); D1.2.4.5.7 29 and 30 and both the groups read them after 26. —$^{a}$) M2 [ इ ]दं; M3 [ ए ]व (for [ ए ]तन्). Ś1 D6 [ ए ]तेन (for [ ए ]केन). —After $30^{ab}$, Ś1 Ñ V1 B D1 (after 30).5.6 M4 ins.:

471* अरण्यवासः साधूनां विशेषेण प्रशस्यते ।
इदं च मे कथयतां ब्राह्मणानां परिश्रुतम् ।
पुरा कृतं पितृवचो यथान्यैरपि साधुभिः ।;

[ (l. 1) B1 -वासश्च (hypm.). —(l. 2) Ñ B3 मया; D1 तु° (for च मे). D6 प्रतिश्रुतं. —(l. 3) B3 reads *sup. lin.* पुरा कृतं (as above). Ś1 D6 यदन्यैर्. ]
while Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.:

472* एतैरपि कृतं देवि ये मया तव कीर्तिताः ।
नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये ।

[ (l. 1) Dg1 Dt1 Dd1 Dm1 M2 परिकीर्तिताः; G2.3 M1 कीर्तितास्तव (by transp.). —(l. 2) M3 धर्मत्मपूर्व. ]
—$^{c}$) Dm1 अभिप्रेत्य. Ś1 V1 D6 प्रायशः पितृभिः सद्भिर्; Ñ B M4 प्रायशश्च (Ñ B3 °शो हि) नृभिः सद्भिर्; D1.2.4.5.7 आचैरपि कृ(D2 हृ)तं देवि. —$^{d}$) Ñ2 B3 कृतो; D2 ततो (for गतो). D2 मार्गो. B4 [ ऽ ]नुमन्यते.

31 M4 om. (hapl.?) 31; D7 om. $31^{ab}$. —$^{ab}$) D2.4.5 न मयैकेन (for तु मया कार्यं). D2.4.5 देवि मा शुचः (for भुवि नान्यथा). Ś1 Ñ V1 B D1.6 करिष्ये वचनं तस्मात्पितुरद्य (Ñ2 B2.4 D1 °रंब; B3 °र्थं) प्रसीद मे. —$^{c}$) D4.7 सर्वं (for कुर्वन्). —$^{d}$) Ś1 B1 Ck किंचिन्. Ś1 Ñ V1 B D1.6 न (Ś1 नु) प्रशस्यते; G3 °**; D2.4.5.7 विप्रमुह्य (D2.7 °च्य)ते; Cm.g.t नाम हीयते (as in text).

32 $^{a}$) Ñ V1 B D1 M4 इत्येवम् (for तामेवम्). Ñ V1 B D1 M4 कौश (D1 °शि; M4 °स)ल्यां; T2 ज*नीं; T3 वचनं (for जननीं). Ś1 D6 इत्युक्त्वा चैव (D6 चापि) कौसल्यां. —$^{b}$) Ś1 Ñ V1 B D1.6 M4 रामो लक्ष्मणम् (for लक्ष्मणं पुनर्). —After $32^{ab}$, Dg1 Dt1 Dd1 Dm1 D2.4.5.7 T G M1–3 ins.:

473* वाक्यं वाक्यविदां श्रेष्ठं श्रेष्ठः सर्वधनुष्मताम् ।

[ D2.4.5.7 अर्थ- (for वाक्य-). Dt1 Dm1 (before corr. as above) D2.5 T3 G1.2 M1.3 श्रेष्ठः (T3 G1 °ष्ठ [ sic ]) (for श्रेष्ठं). Dg1 श्रेष्ठं (for श्रेष्ठः). ]
—$^{c}$) Ś1 Ñ V1 B D1.6 M4 जानामि लक्ष्मणाहं ते (D1 M4 ते लक्ष्मणाहं [ by transp. ]). —$^{d}$) Ś1 Ñ V1 B D1.6 भक्तिभावम् (for मयि स्नेहम्). M4 रामे भक्तिमनुत्तमां. —After $32^{cd}$, Ś1 Ñ V1 B D1.6 M4 ins.:

474* मदर्थमपि ते प्राणा अपि जानामि राघव ।
दुःखशल्यं त्वविज्ञानात्संघट्टयसि मे पुनः ।
तदेव तावद्दुःखं मे यदसौ मत्कृते नृपः ।
दुःखेन महताविष्टः शेते मोहमुपागतः ।
कैकेय्या स्त्रीस्वभावेन पातितो धर्मसंकटे । [5]
मूर्च्छामुपागतो राजा न संज्ञां लभते चिरात् ।
अहो कृच्छ्रमहो दुःखं यत्पापं कर्तुमिच्छसि ।
धर्मज्ञस्य पितुः को नु मादृशो राज्यलिप्सया ।
उत्क्रम्य शासनं जीवेत्सर्वलोकविगर्हितः ।
मा भूत्स कालः सौमित्रे यदहं शासनं पितुः । [10]
इच्छेयं समतिक्रम्य मुहूर्तमपि जीवितुम् ।

[ (l. 1) B3 यदर्थम्. Ñ1 अम (corrupt) (for the first अपि). D1 च (for ते). V1 B3 (also) D1 प्राणान्; B4 प्राणाम् (sic); M4 प्राणांस् (for प्राणा). D1 जह्या; M4 त्यक्ताञ् (for the second अपि). B3 D1 M4 लक्ष्मण (for राघव). —(l. 2) Ś1 D6 इवा (D6 [ before corr. ]°व) ज्ञानात्; M4 (after corr. *pr. m.*) किमज्ञानात्. B4 मनः (for पुनः). —(l. 3) D1 तम् (for तद्). B3 भाव (for तावद्). D1 यदासौ; M4 यदयं (for यदसौ). Ñ1 पुनः (for नृपः). —(l. 4) D6 (before corr.) आविष्टेः. —(l. 5) Ñ2 कैकेयी-. Ñ2 B4 पतितो; B1 पतिता (sic); D1 [ आ ]पातितो (for पातितो). —All the above MSS. (except M4) om. l. 6. —(l. 7) B4 स्वहो (for the first अहो). D1 दुःखं महत्कृच्छ्रं; M4 दुःखमहोकृच्छ्रं (by transp.) (for कृच्छ्रमहो दुःखं). Ś1 तत्पापं; B1 मत्पापं; D6 तत्पापं. Ñ2 D1 अर्हसि; M4 इच्छति. —(l. 8) Ś1 V1 D6 कोत्र; B1 कोस्य; B4 कोर्थः; D1 कोपि; M4 कामान् (for को नु). M4 धन- (for राज्य-). —After l. 8, M4 ins.:

474(A)* को नाम वद सौमित्रे प्राकृतोऽपि पितुः सुतः ।

—(l. 9) M4 व्युत्क्रम्य. M4 -विगर्हितं. —(l. 10) D1 स कालोस्तु; M4 नः स कालः (for भूत्स कालः). V1 B4 D1 यत्राहं; M4 यदाहं (for यदहं). —(l. 11) Ñ2 B4 इच्छेहं. ]

—After $32^{cd}$, Dg1 Dt1 Dd1 Dm1 D2.4.5.7 T G M1–3 ins.:

475* विक्रमं चैव सत्त्वं च तेजश्चैव दुरासदम् ।
मम मातुर्महद्दुःखमतुलं शुभलक्षण ।

[ D2.4.5.7 om. l. 1. —(l. 1) Dg1 Dt1 T G1.3 M3 सु; M2 [ अ ]पि (for [ ए ]व in the post. half). —(l. 2) D2.4.5.7 समं मात्रै (D4.7 °त्रे)व मे दुःखं (for the prior half). Dg1 T1.2 G2.3 M1.2 त्वद् (Dg1 त्वं) दुःखं; D2.4.5.7 मन्यसे; T3 M3 अदुःखं (for अतुलं). D5 -लक्ष*ण. ]

धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥ ३३

संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा ।
न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ ३४

सोऽहं न शक्ष्यामि पितुर्नियोगमतिवर्तितुम् ।
पितुर्हि वचनाद्वीर कैकेय्याहं प्रचोदितः ॥ ३५

तदेनां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् ।
धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ३६

तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः ।
उवाच भूयः कौसल्यां प्राञ्जलिः शिरसानतः ॥ ३७

अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् ।
शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ।
तीर्णप्रतिज्ञश्च वनात्पुनरेष्याम्यहं पुरीम् ॥ ३८

G. 2. 18. 53
B. 2. 21. 47
L. 2. 21. 53

---

—B4 om. 32e–34. —e) B1 नाभिप्रायम्. Ś1 Ñ1 B1.3 D1 अभिज्ञाय; Dg1 Dt1 न वि°; T1 *inf. lin. pr. m.*; Cg as in text ( for अवि° ). —f) D2.4.5.7 मत्सत्त्व( D4 °त्य ) स्य; T2 समस्य च ( for सत्यस्य च ). D2 श्रमस्य ( for शमस्य ). Ś1 Ñ V1 B1–3 D1.6 M4 नैवं( D1 °व ) मां ( B1.2 ममैवं; M4 मा मैवं ) वक्तुमर्हसि. —After 32, Ś1 Ñ V1 B1–3 D1.6 M4 ins. :

476* साधु लक्ष्मण संशाम्य मम चेदिच्छसि प्रियम् ।
[ D1 शंसामि ( for संशाम्य ). ]

33 B4 om. 33 (cf. v.l. 32). —b) D2.4.5.7 धर्मः सत्ये प्रतिष्ठितः. —c) M3 धर्मं. Dg1 ( before corr. ) -संस्थितम् ( for -संश्रितम् ). Dt1 Dd1 Dm1 अप्येतत् ( for एतच्च ). D2.4.5.7 धर्माश्रयं( D4 °श्रितं )हि मे तच्च( D4.7 तच्चैव ). —For 33, Ś1 Ñ V1 B1–3 D1.6 M4 subst.:

477* धर्मे स्थितिः परो लाभो धर्मो धारयते धृतः ।
न च धर्मो धृतो मेऽन्यः पितुराराधनादृते ।

[ (l. 1) Ś1 Ñ2 V1 B3 D6 धर्म-. V1 [ऽ]पायो ( for लाभो ). D1 धर्म ( for धर्मो ). V1 नृपः; D1 बुधः ( for धृतः ). —(l. 2) Ñ1 धर्मो वा धृतो ( hypm. ); Ñ2 धर्माधृते; B2 D1 M4 धर्मो( D1 °र्मं ) मतो ( for धर्मो धृतो ). Ś1 D6 मन्ये; Ñ B1.3 (also as above) मेध; M4 सौम्य ( for मेऽन्यः ). V1 न धर्मोस्ति मतो मेन्यः ( for the prior half ). D1 M4 परः ( for ऋते ). Ś1 D6 पितुराज्ञामृतेनघ ( for the post. half ). ]

34 B4 om. 34 ( cf. v.l. 32 ). —a) D1.2.4.5.7 संश्रुत्य हि; T1.2 सुसंश्रुत्य. —b) D7 G2 M1 च ( for the second वा ). —T3 om. 34cd. —c) D1.2.4.5.7 कर्तव्यं नान्यथा वीर. —d) D1 आश्रुत्य. D1 जानता; D4.7 चेष्टता ( for तिष्ठता ). —For 34, Ś1 Ñ V1 B1–3 D6 M4 subst.; D1 ins. after 34:

478* करिष्यामीति संश्रुत्य तदहं पितृशासनम् ।
न कुर्यां यदि सौमित्रे सर्वथैव धिगस्तु माम् ।

[ (l. 1) V1 संस्मृत्य ( for संश्रुत्य ). Ś1 D1.6 M4 यद् ( for तद् ). —(l. 2) Ñ2 सौमित्रि ( sic ).]

—B3 cont. :

479* जीवितुं नैव शक्ष्यामि पितुर्वाक्यबहिर्मुखः ।

35 a) Ś1 शिक्ष्यामि; Ñ2 B1 शक्नोमि; D6 शक्यामि( sic ). Dt1 Dd1 Dm1 पुनर् ; G3 *तुर् ( for पितुर् ). D2.4.5.7 पितुर्न शक्ष्या( D2 °वच्या [ sic ] )मि( by transp. ). —b) Ñ V1 B3.4 नियोगाद्; B1( after corr. as in text ).2( before corr. as in text ) नियोगान्. Ñ V1 B3 अपवर्तितुं; B1.2 D1 नानुवर्तितुं; B4 विनिवर्तितुं; D6( before corr. )इति वर्तितुं. —c) V1 न पितुर्; T1 पितुर्वा ( for पितुर्हि ). Ś1 Ñ B D1.6 M4 [अ]नुमतं तन्मे( Ñ1 सत्यं; B4 मन्ये ); V1 अनुमतं मे; D2 °देव ( for वचनाद्वीर ). —d) Ś1 Ñ V1 B D1.6 M4 समु ( D1 M4 यदु )दाहृतं; D2.4.5.7 [अ]हं प्रणोदितः.

36 a) Ś1 Ñ B D1.6 M4 एता( M4 °ना )मुत्सृज( D1 °ज्य ); V1 एतास्वत्सृज ( sic ); Dg1 Dt1 Dd1 Dm1 D5 T1.2 G1.3 M1 एतां विसृज( D5 [ before corr. ]°ज्य ); M2 एवं विसृज; M3 एकां विसृज. —b) Ś1 Ñ V1 B D1.6 M4 -विद्या ( M4 -धर्मा )कुलां ( for -धर्माश्रितां ). D2 पातिं; D7 गतिं ( for मतिम् ). —cd) G2.3 आश्रयता तैक्ष्ण्यं. D2.4.5.7 वशगो भव; T3( after corr. as in text ) अभि° ( for अनुगम्यताम् ). Ś1 Ñ V1 B D1.6 धर्ममाश्रित्य स( V1 B2.4 D1.6 म )द्बुद्धिमनुवर्तितुमर्हसि; M4 धर्मोयमस्मिन्नस्माकं शाम्यतां संभ्रमस्तव.

37 a) Ñ1 इत्येवम्; M2 तदेवम्. Ñ1 वचनं; D2.4.5.7 सौमित्रिं; M3 धर्मात्मा ( for सौहार्दाद् ). Ś1 Ñ2 V1 B D1.6 M4 इत्युक्त्वा वचनं( M4 °नुनयन् ) रामो. —b) Dd1 -[अ]ग्रतः. Ś1 Ñ V1 B D1.6 लक्ष्मणं लक्ष्मिवर्धनं; D2.4.5.7 लक्ष्मणं शुभलक्षणं; M4 लक्ष्मणं हेतुमद्वचः. —c) D2.4.5.7 रामः ( for भूयः ). D1 कौशिल्यां. —d) B4 प्रांज*; D7 प्रावलिः ( sic ) ( for प्राञ्जलिः ). B4 शिरसा नतं.

38 a) Ś1 Ñ V1 B D1.6 M4 अनुजानीहि; D2.4.5.7 अनुजानीष्व; G2 अनुमन्य*. G1 मा ( for मां ). —b) Ś1 Ñ V1 B D1.6 M4 करिष्ये शासनं पितुः; Dg1 T1.3 G3 M2 गमिष्येहमितो वनं; D2.4.5.7 गंतुमिच्छाम्यहं वनं. —c) G1 M2.3 च ( for [अ]सि ). Ś1 B2 ( m. also ) D6 मया ( for मम ). —d) Ś1 Ñ V1 B D1.6 M4 पुनरागमनेन( B2 [ m. also ]°नाय ) च. —After 38cd, B1 ins. :

480* यदि विघ्नं करोष्यत्र यास्यामि गहनं वनम् ।

—e) D5 पूर्णप्रतिज्ञश्च; M1 तीर्णप्रतिज्ञं. Ś1 Ñ V1 B D1.6

G. 2. 69. 8
B. 2. 67. 9
L. 2. 73. 8

नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ८
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ ९
अराजके धनं नास्ति नास्ति भार्याप्यराजके ।
इदमत्याहितं चान्यत्कुतः सत्यमराजके ॥ १०
नाराजके जनपदे कारयन्ति सभां नराः ।
उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ ११
नाराजके जनपदे यज्ञशीला द्विजातयः ।
सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥ १२
नाराजके जनपदे प्रभूतनटनर्तकाः ।
उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः ॥ १३
नाराजके जनपदे सिद्धार्था व्यवहारिणः ।
कथाभिरनुरज्यन्ते कथाशीलाः कथाप्रियैः ॥ १४

---

समवाप्नुयात्. ❀ Ct : राजकं सद्धि राष्ट्रं नो नाशं नावाप्नुयाद्यथा इति कतकसंमतः पाठः। ❀ so also Ck. —After 7, Ś1 Ñ2 B D6 ins. :

1556* इक्ष्वाकुः कश्चिदेवेह राजास्माकं विधीयताम् ।

8 Ś1 V1 T3 om. (hapl.) 8. D3.7 transp. 8 and 9. D3 reads 8 twice and then reads 1559*. —$^{a}$) M3 *राजके. —$^{b}$) Dg1 विद्युन्मालि (sic). B3.4 महात्मनः (sic). —$^{d}$) D2 महा-; D5 महान् (for महीं).

9 D3.7 transp. 8 and 9. D5 om. (hapl.?) 9. —After 9$^{ab}$, B3 ins. :

1557* अराजके स्थानदोषः कार्यसिद्धिर्न जायते ।;

while Dg1 ins. :

1558* नाराजके जनपदे जनाः स्वाश्रमवर्तिनः ।

—$^{c}$) B2 repeats पितुः. Ś1 Ñ2 B D6 पुत्राः (for पुत्रो). —$^{d}$) Dm1 T2 G2 या (for वा). D4.7 कुरुते मनः; T2 वर्तते वने (sic) (for वर्तते वशे). Ś1 Ñ2 V1 B D1-3.6 M4 सम्यक्तिष्ठं (V1 D1-3 M4 °ष्ठ)ति शासने.

10 $^{a}$) Dm1 Cg नाराजके. T2 जनं (sic) (for धनं). K(ed.) च (for न). —$^{b}$) D4 *sup. lin.* नास्ति. G1 हि (for [अ]पि). —$^{c}$) G3 हितम्; Cr.m.g.k.t as in text (for इदम्). D4.7 इदमभ्य(D7 °प्य)धिकं राष्ट्रे. —$^{d}$) T1.2 G1 सौख्यम् (for सत्यम्). D4.5.7 कुतोथा(D5 °स्या)स्मास्य-(D5 °प्य)राजके. —For 10, Ś1 Ñ2 V1 B D1-3.6 M4 subst. :

1559* नाराजके पतिं भार्या यथावदनुतिष्ठति ।
नाराजके गुरोः शिष्यः शृणोति नियतं हितम् ।
स्वं नास्त्यराजके राष्ट्रे पुंसां न च परिग्रहः ।
अराजके ह्यात्मनोऽपि प्रभुत्वं न हि कस्यचित् ।

[(l. 1) Ś1 D6 -वर्तते (for -तिष्ठति). —(l. 2) B4 गुरुः (sic) (for °रोः). V1 D1-3 M4 विनयं (for नियतं). —(l. 3) B1 repeats erroneously from राजके up to ग्रहः. Ś1 D6 प्रशांतस्थं (for पुंसां न). M4 transp. न and च. —(l. 4) Ś1 D6 स्वात्मनो. V1 तु; D3 हि (for ऽपि). V1 D1-3 M4 [अ]रित (for हि).]

11 Ś1 Ñ2 V1 B D1.3.4.6.7 M4 (om. 11$^{ab}$) transp. 11 and 12. —$^{b}$) D2 कानयं हि (sic); G3 M1 प्रविशंति; Ct as in text; Ct*p* केपि यांति (for कारयन्ति). ❀ Ck : कुतः यान्ति प्राप्नुवन्ति न्यायविचारायेति शेषः। ❀ Ś1 V1 D2.6 नराः सभाः; Ñ2 B1.3.4 जनाः सभां; B2 D1.5 नराः सभां (by transp.); D3 जनाः सभाः; D4.7 नराः सदा; M3 सभा सुराः (sic). —$^{c}$) D7 *द्यानानि. B2 *sup. lin.*; D3 om. च (subm.). D5 विचित्राणि (for च रम्याणि). —$^{d}$) Ś1 Ñ2 V1 B D1-3.6 M4 प्रपाः; T3 मृष्टाः. Ś1 V1 B2 D6 पुण्याः; B1 M4 पण्य- (for पुण्य-).

12 Ś1 Ñ2 V1 B D1.3.4.6.7 M4 (om. 11$^{ab}$) transp. 11 and 12. Dt1 D2.5 om. (hapl.) 12. T2.3 transp. 12 (along with 1560*) and 13. D1 reads 12 in marg. —$^{a}$) D3 *नपदे. —$^{cd}$) M3 सत्यानि; Ct सत्रम् (for सत्राणि). Dd1 Dm1 M2 [उ]पासते; G2 [अ]न्वास्यते; Cm.g.k.t as in text (for [अ]न्वासते). G3 संतो (for दान्ता). D4.7 क्रतुमध्यासते दांताः (for °). Dg1 D7 शंसित-व्रताः; T2 संश्रित°. Ś1 Ñ2 B D1.3.6 M4 विविधांस्तन्वते(B3 °न्यते) यज्ञान्दस्युसंघैः(Ś1 D6 °गैः; D1.3 M4 °घ) प्रपीडिताः; V1 विविधास्तनुते देशे दारुणग्रहपीडितः. —After 12, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins. :

1560* नाराजके जनपदे महायज्ञेषु यज्वनः ।
ब्राह्मणा वसुसंपूर्णा विसृजन्त्याप्तदक्षिणाः ।

[(l. 1) Dg1 M3 यज्विनः (sic); Cr.m.g.t as above. —(l. 2) Dg1 वसुसंपन्ना.]

13 T2.3 transp. 12 (along with 1560*) and 13. —$^{b}$) Dt1 Dd1 Dm1 Ct प्रहृष्ट-; D4.7 प्रभूता (for प्रभूत-). Dg1 reads नट in marg. —$^{c}$) Ñ2 B2.3 उत्सवांश; Cr.m.g.k.t as in text (for °वाश्च). Ñ2 B2 D5 समाजांश. —$^{d}$) Ñ2 V1 B D1-4.6.7 G2 M4 वर्तंते; Dd1 D5 वर्धते (sic). Ś1 Ñ2 V1 B D1.2(m.).3.6 M4 जनह(B4 °व)-र्षणाः(Ñ2 °र्षयः [sic]; D3 °र्षिणः). —After 13, D4.5.7 ins. 1562*.

14 $^{b}$) D5 प्रभूता (for सिद्धार्था). —$^{c}$) Dt1 Dd1 Dm1 D4.5 अभिरज्यंते; Cv अनुरज्यंते (as in text); Cr.m.g.k नानुरज्यंते; Ct न रज्यंते. D7 कथाभि**रज्यंते. —$^{d}$) D4 M1 कथाशीलः; D5.7 कथाशीलैः. T2 कथाः प्रियैः; G3 M2 °प्रियाः; M3 कथाः प्रियाः (for कथाप्रियैः). —For 14, Ś1 Ñ2 V1 B D1-3.6 M4 (l. 6-8 only) subst. :

नाराजके जनपदे वाहनैः शीघ्रगामिभिः ।
नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥ १५
नाराजके जनपदे धनवन्तः सुरक्षिताः ।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ १६
नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ १७
नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्रसायंगृहो मुनिः ॥ १८

G. 2. 69. 23
B. 2. 67. 23
L. 2. 73. 21

1561* नाराजके जनपदे कश्चिदर्थः प्रसिद्ध्यति ।
व्यवहारा न वर्तन्ते धर्माः सज्जनसेविताः ।
वेदान्नाधीयते विप्रा न च विन्दन्ति निर्वृतिम् ।
कथाशीलाश्च रज्यन्ते न कथाभिरराजके ।
न विवाहाश्च वर्तन्ते कन्यानां जनहर्षणाः । [5]
नित्योद्विग्नाः प्रजाः सर्वा दुःखिताश्च भवन्त्यपि ।
नाराजके जनपदे विश्वस्ताः कुलकन्यकाः ।
अलंकृता राजमार्गे क्रीडन्ति विहरन्ति च ।

[ (l. 1) D1 प्रसिद्ध्यते (sic). —(l. 2) D2 reads the prior half except न्ते in marg. Ś1 D6 न वर्धते; B3 निवर्तंते (for न वर्तन्ते). Ś1 D6 om. (hapl.) from धर्माः up to वर्तन्ते in l. 5. V1 D1 धर्म्याः (for धर्माः). Ñ2 B3 सज्जनरंजनाः. —(l. 3) B3 देवान् (meta.) (for वेदान्). V1 D3 विप्रो. V1 B1.3 D2 विंदति; G(ed.) विंदते (for विन्दन्ति). —(l. 4) V1 भुज्यंते; B1 राजंते (*sup. lin.* also as above); D6 राक्षंते (sic) (for रज्यन्ते). —(l. 5) V1 B4 विहाराश्च (for विवाहाश्च). B3 om. च (subm.). Ñ2 V1 कल्याणा (for कन्यानां). B1 जनहर्षकाः; B2 च न हर्षणाः. —(l. 6) D1 विभवंत्यपि (hypm.) (for भव°). V1 दुःखान्यनुभवंत्यपि; B4 दुःखिता श्चभवंत्यपि (sic) (for the post. half). —(l. 7) Ñ2 विश्वस्तः (sic). ]

—After 14, Dg1 Dt1 Dd1 Dm1 T1.3 G M1–3 ins.; D4.5.7 ins. after 13; T2 ins. after 16:

1562* नाराजके जनपदे उद्यानानि समागताः ।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ।

[ (l. 1) Note hiatus between the two halves. Dg1 Dt1 M3 तूद्यानानि (to avoid hiatus); D4.5.7 कुंडलिन्यः (for उद्यानानि). —(l. 2) D4.7 उद्याने (for सायाह्ने). D4.7 हि समेखलाः; D5 हेममेखलाः (for हेमभूषिताः). ]

**15** M3 om. (hapl.) 15–16. D4.5.7 om. (hapl.) 15. Dt1 T2.3 (om. 16$^{cd}$) transp. 15 and 16 (along with the star passages). —$^{b}$) Dt1 Dd1 -वाहिभिः (for -गामिभिः). Ś1 Ñ2 V1 B D1–3.6 M4 विच(V1 D1–3 M4 °ह)रंत्य(D1 °ति)कुतोभयाः. —$^{cd}$) Dg1 -कारिणः; G1 कामिभिः (for कामिनः). Ś1 Ñ2 V1 B D1–3.6 M4 कामिनः सह कांताभिर्विहारोद्यानभूमिषु.

**16** G1 (hapl.?) M3 om. 16 (for M3 cf. v.l. 15). Dt1 T2.3 (om. 16$^{cd}$) transp. 15 and 16 (along with the star passages). —$^{b}$) Ś1 Ñ2 V1 B D1–3.6 M4 कुटुंबिनः (for सुरक्षिताः). —T3 om. 16$^{cd}$. —$^{c}$) V1 निवृतद्वाराः; Dm1 विरतद्वाराः (sic). T1 शे***वृतद्वाराः (damaged). —$^{d}$) D4.7 -गोरक्ष्य-. T2 -जीवनः. Ś1 Ñ2 V1 B D1–3.6 M4 विश्वस्तमकुतोभयाः (D1 °यात्). —After 16, Dg1 Dd1 Dm1 D4.5.7 T1 G2.3 M1.2 ins.; Dt1 T2.3 G1 (owing to omission) ins. after 15; M3 (owing to omission) cont. after 1562*:

1563* नाराजके जनपदे बद्धघण्टा विषाणिनः ।
अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ।
नाराजके जनपदे शरान्संततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ।

[ (l. 1) M1 बंधघंटा. D4.5.7 पताकिनः; Cr.g.k.t as above (for विषाणिनः). —(l. 2) D4.7 स्वपंति; D5 व्रजंति (for अटन्ति). T G M1–3 षाष्टि°; Cg.k as above (for षष्टि°). —(l. 3) T1.2 सततम्. D4.5.7 धनुष्पाणिरुपास्यते (for the post. half). —(l. 4) Cv.m.g.t as above; Cr उपावसे (for उपासने). D4.5.7 सशब्दमिषुमस्यतः (for the post. half). ]
—After 16, T2 ins. 1562*.

**17** $^{b}$) Ś1 Ñ2 V1 B D1–3.6 M4 नाना(Ś1 D6 नराः)प(Ś1 D1 पु)ण्योपजीविनः; D5 वणिजो धनहारिणः. —$^{c}$) D4.5.7 दूरम् (for क्षेमम्). —$^{d}$) Dt1 M3 -पुण्य- (for -पण्य-). D4.7 -समाश्रिताः; T2 -समाहिताः (for °चिताः). —For 17$^{cd}$, Ś1 Ñ2 V1 B D1–3.6 M4 subst.:

1564* पण्यान्यादाय गच्छन्ति देशाद्देशं भयार्दिताः ।

[ B3 गेहाद् (for देशाद्). Ś1 D6 देशांतरं तथा (for देशं भयार्दिताः). ]

—Thereafter cont.:

1565* नाराजके कृषिकराः कर्षन्ति भयपीडिताः ।
पशवो नामिवर्तन्ते नित्यं राष्ट्रे ह्यराजके ।

[ (l. 1) B1 कविकराः (sic) (for कृषि°). V1 D1–3 कुर्वंति (for कर्षन्ति). —(l. 2) Ñ2 B1.3 [ऽ]पि न वर्तंते; V1 B4 D1–3 M4 न वि(B4 नामि; M4 न नि)वर्धंते (for नाभिवर्तन्ते). Ñ2 B3.4 राज्ये हि; B1 राष्ट्रेपि (for राष्ट्रे हि). ]

**18** D3–5.7 om. (hapl.) 18. Dt1 reads 18 in marg. —$^{b}$) D2 भवति (for चरति). M4 [ए]कपदो (for °चरो). —$^{c}$) B1 तापयंस्; Dd1 भाव्य° (sic) (for भावयन्). Ś1 Ñ2 B D1.2.6 M4 तपसा (for आत्मना). V1 भावयांस्तापसात्मानं (sic). —$^{d}$) T3 सायं गृहे (for -सायंगृहो).

G. 2. 69. 24
B. 2. 67. 24
L. 2. 73. 22

नाराजके जनपदे योगक्षेमं प्रवर्तते ।
न चाप्यराजके सेना शत्रून्विषहते युधि ॥ १९
यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम् ।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥ २०

नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव नरा नित्यं भक्षयन्ति परस्परम् ॥ २१
ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः ।
तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥ २२

---

**19** V1 om. $19^{bc}$.—$^{b}$) Ś1 Ñ2 B Dg1 Dt1 D2–7 G1 M3.4 योग(B4 M3 °गः)क्षेमः; Cm.g as in text (for °क्षेमं). Ś1 Ñ2 B D1–7 M4 प्रकल्प(Ñ2 B1 D7 M4 °ल्प्य; B3 [before corr.] °कंप)ते (for प्रवर्तते). G3 नराः शस्त्रविवर्तने.—$^{c}$) Ś1 Ñ2 B D1–3.6 M4 [अ]राजकं(D2 °के) सैन्यं (for °के सेना).—$^{d}$) Ś1 B1–3 शत्रुं; Ñ2 शत्रुर् (sic). Ś1 Ñ2 V1 B D1–3.6 M4 विजयते (for विषहते). V1 शुचिः; D4.5.7 परान् (for युधि).—After 19, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.:

1566* नाराजके जनपदे हृष्टैः परमवाजिभिः ।
नराः संयान्ति सहसा रथैश्च प्रतिमण्डिताः ।
नाराजके जनपदे नराः शास्त्रविशारदाः ।
संवदन्तोपतिष्ठन्ते वनेषूपवनेषु च ।
नाराजके जनपदे माल्यमोदकदक्षिणाः । [5]
देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ।
नाराजके जनपदे चन्दनागुरुरूषिताः ।
राजपुत्रा विराजन्ते वसन्त इव शाखिनः ।

[(l. 2) Dg1 T1 M2 परि- (for प्रति-). G1.3 Cr.k.tp -मंडितैः; Ct as above.—(l. 3) Dd1 Dm1 शस्त्र- (for शास्त्र-).—(l. 4) G1 संवदंति. Dg1 [ऽ]वशिष्यंते; T G3 M1–3 [ऽ]वतिष्ठंते; G1 न तिष्ठंति (for [उ]पतिष्ठन्ते). ❀ Ct : संवदन्त उपतिष्ठन्ते संघिस्त्वार्षः । ❀ M2 नगरेषु (for [उ]पवनेषु). Dg1 G1 M3 वा (for च).—(l. 6) T3 देवतार्थश्च नार्थाय (sic) (for the prior half). Dd1 Dm1 M1 कल्पंते; Cr.g.k.t as above.—(l. 7) Dm1 T1 M2.3 -[अ]गरु- (for -[अ]गुरु-). Dd1 Dm1 G1 -भूषिताः; Cg as above (for -रूषिताः).—(l. 8) B(ed.)शालिनः (for शाखिनः).]

**20** $^{a}$) G1 [अ]नुदके. Ś1 D6 नदी शुष्कजला यद्वद् ; Ñ2 V1 B D1–3 M4 नदी यथा शुष्कजला (B3 [m.] °जला; D3 °जपला [sic]); D4.5.7 विगोपा(D5 °लापा; D7 °पोगा [meta.])श्च यथा गावो.—$^{b}$) Ś1 D6 यद्वच् (for यथा). Ś1 Ñ2 V1 B D1–7 M4 चा(Ñ2 च [sic]; D2.7 वा)तृण (B3 °तूर्ण)कं (for वाप्यतृणं). Ñ2 वलं; B3 ब(also as in Ñ2)लं (for वनम्).—$^{c}$) Ñ2 V1 B1–3 D1–3 M4 अगोपाश्च; B4 °पाश्चेद् ; D4.5.7 अजलाश्च; G2 अगोपाल (sic) (for अगोपाला). D4.5.7 नद्यस् (for गावस्).—$^{d}$) V1 G3 राज्यम् (for राष्ट्रम्).—After 20, Ñ2 V1 B D1.3 M4 ins.:

1567* विसारथिः समुत्क्रान्तैर्वाजिभिः स्यन्दनो यथा ।
गच्छन्विनाशमाप्नोति तथा राष्ट्रमराजकम् ।

[(l. 1) V1 समुत्कांतैर् ; B2 समुद्रांतैर् (sic).—(l. 2) D1 छेशं; D3 क्लिशन् ; M4 क्लिष्टं (for गच्छन्).];

while Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. after 20; whereas D4.5.7 ins. after 23:

1568* ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः ।
तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ।

[(l. 1) D4.5.7 संज्ञायां(D5 °नं) (for प्रज्ञानं). D4 (before corr. as in D5) ज्ञाने धूमो; D5.7 ज्ञानं धूमो (by transp.). D5 विभावसौ.—(l. 2) D4.7 योस्माकं तु(D4 *); D5 येषां ज्ञेयो (for तेषां यो नो). D4.7 पंचत्वम् ; T3 दैव° (for देवत्वम्). D5 उपागतः.]

**21** D4.5.7 om. 21–22.—$^{b}$) Ś1 D6 स्वास्थ्यं; Ñ2 B3 शं वै; V1 B1.2 D1–3 M4 स्वं वै; B4 तुष्टो; G(ed.)स्व वै; Cr.t as in text; Crp सुखं (for स्वकं). M3 भवसि (sic). Ñ2 B1.3 कर्हिचित्.—After $21^{ab}$, Ś1 Ñ2 V1 B D1–3.6 M4 ins.:

1569* हरन्ति दुर्बलानां हि स्वमाक्रम्य बलान्विताः ।
अराजके जनपदे दुर्बलान्बलवत्तराः ।

[(l. 1) Ñ2 दूरंति (sic); B1 चरंति (for ह°). Ñ2 B4 समाक्रम्य; V1 D2.3 M4 स्वान्या°; D1 तान्या° (for स्वमाक्रम्य). Ś1 D6 बलाधिकाः.—(l. 2) D2 ब*वत्तराः.]

—$^{c}$) Dt1 Dd1 Dm1 T1 जना (for नरा).—For $21^{cd}$, Ś1 Ñ2 V1 B D1–3.6 M4 subst.:

1570* भक्षयन्ति निरुद्वेगा मत्स्यान्मत्स्या इवाल्पकान् ।

[Ś1 D6 क्षपयंति. B1 निरुद्वेगान् ; B4 D1.3 निरुद्विग्ना (for निरु°). Ś1 V1 B2 D1.3 M4 मत्स्या मत्स्यान् (by transp.). D2 *त्स्या मत्स्याल्पकान्यथा (for the post. half).]

**22** D4.5.7 om. 22 (cf. v.l. 21).—$^{a}$) Dd1 Dm1 तु (for हि).—$^{c}$) G3 Crp भोगाय (for भावाय).—$^{d}$) T3 राम- (for राज-).—For 22, Ś1 Ñ2 V1 B D1.2.3 (followed by 1573*).6 M4 subst.:

1571* व्युत्क्रान्तधर्ममर्यादा नास्तिका निरपत्रपाः ।
भवन्त्यराजके राष्ट्रे मानवाः क्रूरनिश्चयाः ।

[(l. 1) V1 -वर्त्ममर्यादा.]

—After 22, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.:

1572* यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ।
राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ।
यमो वैश्रवणः शक्रो वरुणश्च महाबलः । [5]
विशिष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ।

अहो तम इवेदं स्यान्न प्रज्ञायेत किंचन ।
राजा चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥ २३
जीवत्यपि महाराजे तवैव वचनं वयम् ।
नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥ २४

स नः समीक्ष्य द्विजवर्य वृत्तं
नृपं विना राज्यमरण्यभूतम् ।
कुमारमिक्ष्वाकुसुतं वदान्यं
त्वमेव राजानमिहाभिषिञ्चय ॥ २५

G. 2. 69. 34
B. 2. 67. 38
L. 2. 73. 31

इति श्रीरामायणे अयोध्याकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

---

[ ( l. 1 ) G3 वृष्टिः ( sic ); Cv.m.g.k.t as above ( for दृष्टिः ). T2 प्रवर्तने. —Before l. 2, Dm1 ins. राम. —( l. 2 ) G3 राज्यस्य; Cv.r.m.g.k.t as above ( for राष्ट्रस्य ). —Before l. 3, Dm1 ( m. ) ins. गायत्री. —( l. 3 ) G1 धर्मं; Cm.t as above ( for धर्मेश् ). —( l. 4 ) M1 राज ( sic ) ( for the first राजा ). —( l. 5 ) T3 G3 M2.3 यमवैश्रवणौ ( T3 M2 °णो [ sic ] ). M3 शक्रौ ( sic ). —( l. 6 ) Dg1 विशिष्यते; T2.3 G2.3 M1–3 Cv.r.m.g.k विशेष्यं ( G2 M1 Ck °ष्य; M3 °षं )ते; Ct as above ( for विशिष्यन्ते ). ]

23 D3 om. 23. —a) Ś1 Ñ2 B D1.2.4–7 M4 अंधं; V1 क्षध्वं ( sic ) ( for अहो ). ❀ Ct : तम इति प्रथमा सप्तम्यर्थे । अकारान्ततमशब्दस्य तमे इति सप्तम्यन्तं वा । तमस्यपि तमं तथा इति द्विरूपकोशात् । ❀ —b) V1 B1.4 T3 G1 M3.4 प्र( V1 प्रा )ज्ञायत; B2 प्राज्ञायेत; Dt1 प्रजायेत; D5 [ इ ]ह ज्ञायेत; Cr.m.g.k.t as in text ( for प्रज्ञायेत ). —c) B3 ( m. also ).4 राज्ये ( for लोके ). —d) Ś1 D6 [ अ ]साधु वा; Dg1 T2.3 G1 °धुनि; D1.2 M2 °धुना; G3 °धु च; Cr.g.k.t as in text; Cm [ अ ]साध्विति ( for [ अ ]साधुनी ). —After 23, D4.5.7 ins. 1568*, while Ś1 Ñ2 V1 B D1.2.3 ( cont. after 1571* owing to omission ).6 M4 ins. :

1573* दस्यवोऽपि न च क्षेमं राष्ट्रे विन्दन्त्यराजके ।
द्वावाददाते ह्येकस्य द्वयोश्च बहवो धनम् ।

[ ( l. 1 ) Ñ2 तस्यवो ( corrupt ); V1 वहवो ( for दस्यवो ). M4 transp. न and च. D1 क्षमस्यवोपि ( sic ) न क्षेमं ( for the prior half ). —( l. 2 ) Ñ2 V1 द्वाराददा( V1 °दे )ते ( sic ); B4 °दाति ( for द्वावाददाते ). D3 ( with hiatus ) एकस्य. D1 वा ( for च ). ]

—Ś1 Ñ2 B D6 cont. :

1574* तस्माद्राजैव कर्तव्य इच्छद्भिः शुभमात्मनः ।
द्विजानां वचनं श्रुत्वा वसिष्ठं मन्त्रिणोऽब्रुवन् ।

[ ( l. 1 ) B4 प्रकर्तव्य ( for [ ए ]व क° ). Ñ2 B1.3 चात्मनः शुभं; B2.4 ह्या( B2 आ )त्मनः सुखं ( for शुभमात्मनः ). ]

24 b) Dd1 तदा; Dm1 T2 तथा; Cg.t as in text ( for तव ). D4.7 वशगा; Cr.g.t as in text ( for वचनं ). Ś1 D6 महाभागा( D6 °गो; L[ ed. ]°ग ) वयं प्रभो; Ñ2 V1 B D1–3 M4 सह राज्ञा वयं प्रभो; D5 तव देव वचो वयं; G1 तवैव वचनक्रियां. —cd) D7 नातिक्रम्यामहे; T2 M1–3 °क्रामामहे; T3 G3 °चक्रामहे; Cr.g as in text ( for °क्रमामहे ). ❀ Ct : नातिक्रमाम । ❀ Ś1 Ñ2 V1 B D1–3.6 M4 शासने तव तिष्ठामः स नः( M4 तन्नः ) शाधि तपोधन.

25 a) Dm1 समः; D4.7 अतः; D5 M2 ततः; M3 स तं; Cr.m.g.k.t as in text ( for स नः ). D4.5.7 राज्यं; Cv.r.g.k.t as in text ( for वृत्तं ). —b) D5 अकंटकं ( for नृपं विना ). Dg1 Dt1 Dd1 Dm1 T2 Ct राष्ट्रम् ; D5 श्रेष्ठम् ; Cr.m.g.k as in text ( for राज्यम् ). D4.7 निष्कंटकं श्रेष्ठ वरेण्यभूतं. —c) Dm1 इक्ष्वाकु-. Dt1 Dd1 Dm1 Ct -सुतं तथान्यं; D4.5.7 Ck -वरं( Ck -सुतं ) वरेण्यं; G2 M1 -वरं° ( for -सुतं वदान्यं ). —d) T3 त्वमेन( °नं ? ); Ck तमेव ( for त्वमेव ). Dg1 D4.7 T G M1–3 Cm.g.k [ अ ]भिषिंच; Dt1 D5 Ct[ अ ]भिषेचय; Cr अभिषिंचस्व. —For 25, Ś1 Ñ2 V1 B D1–3.6 M4 subst. :

1575* वसिष्ठ धर्मज्ञ महानुभाव
स नः समीक्ष्यार्हसि विप्रवर्य ।
कुमारमिक्ष्वाकुकुलप्रसूतं
तमाशु राजानमिहाभिषेक्तुम् ।

[ ( l. 2 ) Ñ2 समः; M4 तत्र ( for स नः ). B2 विप्रवर्यान्. —( l. 3 ) V1 D1.3 -कुले. V1 प्रशस्तं ( for -प्रसूतं ). —( l. 4 ) Ñ2 तनामि ( sic ); V1 D1–3 M4 त्व° ( for तमाशु ). ]

Colophon. —After *Kāṇḍa name*, D2.3.5 ins. भरतपर्वणि. —*Sarga name* : Ś1 Ñ2 B D6 राजप्रशंसा; V1 भरतनिश्चयः; D1.3 मंत्रविनिश्चयः( D3 °*); D2 मंत्रिनिश्चयः; D4 पौरजानपदवाक्यं; D5 विराजवर्णनः; D7 मंत्रिवाक्यं. —*Sarga no.* ( figures, words or both ) : B1 D3.6 om.; Ś1 73; Ñ2 V1 D7 M4 69; B2 Dg1 Dt1 Dd1 Dm1 T G M1–3 67; B3 D4 68; B4 64; D1 125; D2.5 72. —After colophon, D6 G conclude with श्री( D6 om. )रामाय नमः; T2 श्रीरामचन्द्राय नमः.

# ६२

G. 2. 70. 1
B. 2. 68. 1
L. 2. 74. 1

तेषां तद्वचनं श्रुत्वा वसिष्ठः प्रत्युवाच ह ।
मित्रामात्यगणान्सर्वान्ब्राह्मणांस्तानिदं वचः ॥ १
यदसौ मातुलकुले पुरे राजगृहे सुखी ।
भरतो वसति भ्रात्रा शत्रुघ्नेन समन्वितः ॥ २
तच्छीघ्रं जवना दूता गच्छन्तु त्वरितैर्हयैः ।
आनेतुं भ्रातरौ वीरौ किं समीक्षामहे वयम् ॥ ३
गच्छन्त्विति ततः सर्वे वसिष्ठं वाक्यमब्रुवन् ।
तेषां तद्वचनं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ॥ ४
एहि सिद्धार्थ विजय जयन्ताशोक नन्दन ।
श्रूयतामितिकर्तव्यं सर्वानेव ब्रवीमि वः ॥ ५
पुरं राजगृहं गत्वा शीघ्रं शीघ्रजवैर्हयैः ।
त्यक्तशोकैरिदं वाच्यः शासनाद्भरतो मम ॥ ६
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः ।
त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ७

## 62

☞ Ñ1 missing for Sarga 62 (cf. v.l. 1058*). Dm1 begins with ॐ; M1.2 with श्रीरामाय नमः.

1 $^{a}$) T1.3 हि (for तद्). V1 श्रुत्वाथ मंत्रिणां वाक्यं. —$^{b}$) Ñ2 B1.2 (marg. also as in text).3 M4 तान्; G2 हा (for ह). —For 1$^{c}$–6$^{b}$, D4.5.7 subst. 1581*. V1 D1–3 प्रत्यभाषत. —$^{c}$) Dt1 Dd1 Dm1 T1.2 G1.3 M3 Ck.t -जनान् (for -गणान्). Ś1 Ñ2 V1 B D1–3.6 M4 सुमंत्रप्रभृतीन्सर्वान्. —$^{d}$) D2 ब्राह्मणानिदमब्रवीत्.

2 For D4.5.7 cf. v.l. 1 and 6. —$^{ab}$) M3 यदा (for यद्). Dt1 Ck.t दत्तराज्यः परं सुखी (for $^{b}$). Ś1 Ñ2 V1 B D1–3.6 M4 योसौ (B4 येषां) मातामहकुले कुमारः श्रीमतां वरः. —$^{d}$) Ś1 Ñ2 V1 B D1–3.6 गतः सह; Dt1 मुदान्वितः; M4 ततः सह (for समन्वितः).

3 For D4.5.7 cf. v.l. 1 and 6. —$^{a}$) Dd1 Dm1 G2 M1.4 तौ; T2.3 G3 M3 तं (for तच्). T2 G2 M4 शीघ्र- (for शीघ्रं). M4 -गमनैर् (for जवना). —$^{b}$) Dt1 G3 M3 त्वरितं; M4 त्वरिता (for °तैर्). —After 3$^{ab}$, M4 ins.:

1576* आनयन्तु नरव्याघ्रौ राजपुत्रौ यशस्विनौ ।

—$^{c}$) M4 भरते ध्रियमाणे तु. —$^{d}$) T3 G1.2 M4 समीक्ष्यामहे (sic). —For 3, Ś1 Ñ2 V1 B D1–3.6 subst.:

1577* तमितः शीघ्रगैर्गत्वा नराः प्रजवितैर्हयैः ।
इहानयन्तु वचनान्नृपस्यात्ययवादिनः ।

[(l. 1) Ś1 B2 D6 प्रव्रजितैर्. V1 D1–3 आशु गत्वा कुमारं तं (D2 त्वं [sic]; D3 स्वं) शीघ्रमेव तरस्विनं. —(l. 2) D3 भुवनान् (for वचनान्). Ñ2 नृ*स्य; B4 नृपान् (for नृपस्य). Ś1 D6 [अ]मृत्यु-; Ñ2 [अ]धज- (sic); V1 [अ]र्थाय; D1.2 [अ]व्यय-; G(ed.)प्रिय- (for [अ]त्यय-). V1 -वेदिनः (for -वादिनः).]
—B3 cont.:

1578* आगते भरते चात्र राजकार्यं भविष्यति ।

4 For D4.5.7 cf. v.l. 1 and 6. —$^{a}$) M2 च मे; M3 सतः (sic) (for ततः). —$^{b}$) G3 अब्रवीत् (sic). M4 ब्राह्मणा ब्रुवन् (metri causa). —$^{c}$) Dg1 Dd1 Dm1 T2.3 G M तु (for तद्). T3 om. श्रुत्वा. —After 4$^{c}$, T3 repeats (erroneously) 1$^{b}$–2$^{a}$. —$^{d}$) M4 [ऽ]पीदम् (for वाक्यम्). —For 4, Ś1 Ñ2 V1 B D1–3.6 subst.:

1579* इति श्रुत्वा वचस्तस्माद्वसिष्ठाद्राजमन्त्रिणः ।
गच्छन्त्वाश्विति सर्वेऽथ प्रत्यूचुर्हृष्टमानसाः ।

[(l. 1) V1 D1–2 वसिष्ठस्य वचस्ते (for वचस्तस्माद्वसिष्ठाद्). —(l. 2) Ś1 D6 गच्छंत्विति च; V1 गच्छंतामिति (sic); D1 गच्छंतश्चेति (for °न्त्वाश्विति). Ś1 D2.6 ते; V1 D1.3 तं (for ऽथ). V1 तपसां निधिं (for हृष्ट°).]

5 For D4.5.7 cf. v.l. 1 and 6. —$^{ab}$) Dd1 स हि (for एहि). T3 यजंत (meta.) (for जयन्त). Dg1 ननंद (meta.); Dd1 Dm1 नाशन (for नन्दन). M4 सौम्याः सिद्धार्थविजयाशोका निर्गच्छताशु वै. —$^{c}$) M4 यदि (for इति-). —$^{d}$) M4 सर्वांश्चामंत्रयामि वः. —For 5, Ś1 Ñ2 V1 B D1–3.6 subst.:

1580* ततो जयन्तं सिद्धार्थमशोकं चाब्रवीदिदम् ।
वसिष्ठो जपतां श्रेष्ठो दूतानाहूय सत्वरम् ।

[(l. 1) D2 जयंत; D3 जयंति (for जयन्तं). D2 अशोचाद् (sic) (for अशोकं च). —(l. 2) V1 D1–3 तपसां (D2.3 °तां) (for जपतां). D1 शूरो (for श्रेष्ठो). V1 D2.3 सत्वरः. Ś1 D6 दूतानाह तपोधनः (for the post. half).]

6 $^{a}$) G3 पुरा (for पुरं). B4 त्यक्त्वा (for गत्वा). Cv appears to read the following for $^{a}$ ❀ Cv : यदस्य तच्छीघ्रमिति च पाठः । ❀. —T3 om. (hapl.) 6$^{b}$–8$^{c}$. —$^{b}$) Ś1 Ñ2 B2 D1.2.6 प्र(D1 *)व्रजितैर्; V1 B1.3.4 D3 M4 प्रजवितैर्; G1 शीघ्रगतैर् (for शीघ्रजवैर्). —For 1$^{c}$–6$^{b}$, D4.5.7 subst.:

1581* भरते श्रूयमाणे तु किं समीक्ष्यामहे वयम् ।
भो भो विजय सिद्धार्थ जयन्ताशोक गच्छत ।

[(l. 1) D4 भरतः (sic).]

—$^{c}$) V1 त्यज शोकमिदं; D4.5.7 कैकेय्या न्यायतो (for त्यक्तशोकैरिदं). —$^{d}$) Ś1 D6 भवं (D6 [after corr.] °र) तो वचनात्पितुः; Ñ2 V1 B D1–3 M4 भरतः शासनात्पितुः.

7 T3 om. 7 (cf. v.l. 6). M4 om. 7$^{ab}$. —$^{a}$) Dd1 G M1–3 त्वा (for त्वां). Ś1 Ñ2 V1 B D1–3.6 आ( V1 D1–3

मा चास्मै प्रोपितं रामं मा चास्मै पितरं मृतम् ।
भवन्तः शंसिपुर्गत्वा राघवाणामिमं क्षयम् ॥ ८
कौशेयानि च वस्त्राणि भूषणानि वराणि च ।
क्षिप्रमादाय राज्ञश्च भरतस्य च गच्छत ।
वसिष्ठेनाभ्यनुज्ञाता दूताः संत्वरिता ययुः ॥ ९
ते हस्तिनपुरे गङ्गां तीर्त्वा प्रत्यङ्मुखा ययुः ।
पाञ्चालदेशमासाद्य मध्येन कुरुजाङ्गलम् ॥ १०

G. 2. 70. 11
B. 2. 68. 13
L. 2. 74. 11

प्रा )ह त्वां कुशलं पृ( D2 ह )ष्ट्वा. —$^b$) Ś1 D6 राजा; Ñ2 V1 B D2.3 पिता; D1 सर्वे; T2 प्राहुः ( for प्राह ). D1 च नृप- ( for सर्वे च ). —$^c$) Ś1 Ñ2 V1 B D1–3.6 M4 त्वरावाञ्शीघ्रमागच्छ. —V1 om. $7^d$–$9^c$. —$^d$) Ś1 Ñ2 B D1–3.5.6 कार्यम्; D4.7 कृत्यं च ( for कुलम् ). Ś1 D6 विभो; G1 तव; G3 त्वयि ( for त्वया ).

8 T3 om. $8^{abc}$; V1 om. 8 ( cf. v.l. 6 and 7 respy. ) —$^a$) Ś1 Ñ2 B D1–4.6.7 न ( for मा ). D1–3 तस्मै ( for चा° ). Ś1 Ñ2 B1.3 D3 प्रेषितो; B2.4 D1.2.6 M4 प्रोषितो ( for प्रोषितं ). Ś1 Ñ2 B D1–3.6 M4 रामो; D4( marg. also as in text ).5.7 बंधुं ( for रामं ). —$^b$) Ś1 Ñ2 B D1–3.6 M4 न राजा स्वर्गतस्तथा. —$^c$) D4.7 शासनाद् ( for शंसिपुर् ). —$^d$) Dt1 Ct इतः; Dm1 G1.2 M1.2 Ck इदं; T2 इव ( for इमं ). Ś1 Ñ2 B D1–3.6 M4 गत्वा भवद्भिरा( Ś1 D6 °र्ना )वेद्यः पृष्टैरपि कथंचन.

9 V1 om. $9^{abc}$ ( cf. v.l. 7 ). D2 om. $9^{abcd}$. —$^a$) T1 ( *inf. lin. pr. m.* as in text ) M3 Cv.r*p* कौशिकानि; Cm.g as in text ( for कौशेयानि ). Ś1 Ñ2 B D1.3.6 M4 राजार्हाणि वि( D1 °र्हणानि )चित्राणि. —$^b$) Ñ2 B2.3 [ अं ]-बराणि; B4 [ आ ]चराणि ( sic ) ( for वराणि ). —$^c$) Ś1 Ñ2 B D1.3.6 M4 शीघ्रम् ( for क्षिप्रम् ). T2 आज्ञाय ( for आदाय ). D1 गच्छध्वं; D3 गच्छ त्वं; M4 गच्छंतु ( for राज्ञश्च ). —$^d$) M3 [ अ ]पि ( for च ). Ś1 D6 यच्छत; B2.4 M3 गच्छतः; Dg1 D4.7 T3 G3 °थ ( for गच्छत ). V1 D1.3 M4 राज्ञश्च( V1 त्वं राज्ञो ) भरतस्य च. —After $9^{cd}$, Ś1 Ñ2 V1 B D1.3.6 M4 ins.; D2 ( owing to om. ) ins. after 8:

1582* इति ते दत्तसंदेशा दूतास्त्वरितमानसाः ।

[ Ś1 B4 D6 ते ज्ञातसंदेशा( B4 °शात ); V1 दत्तस्वसंदेशा ( for ते दत्त° ). B4 भृत्यास् ( for दूतास् ). ];

while Dg1 Dt1 Dd1 Dm1 D4.5.7 T G M1–3 ins. :

1583* दत्तपथ्यशना दूता जग्मुः स्वं स्वं निवेशनम् ।
केकयांस्ते गमिष्यन्तो हयानारुह्य संमतान् ।
ततः प्रास्थानिकं कृत्वा कार्यशेषमनन्तरम् ।

[ ( l. 1 ) G1 श्रुत्वा ( for दत्त- ). D4.7 -पां( D7 पं )थोदना; D5 -पथ्योदना ( for -पथ्यशना ). D4.5.7 G3 स्वं स्वं जग्मुर् ( by transp. ). —( l. 2 ) D4.5.7 कैकेयांस् ( for केकयांस् ). D5 गमिष्यंति. D4.5.7 रथान् ( for हयान् ). —( l. 3 ) Dt1 Dd1 D5 T2 G2.3 M1.3 प्रस्थानिकं; Cm.g.k.t as above. D4.5.7 अतंद्रिताः ( for अनन्तरम् ). ]

—$^e$) T2 [ अ ]भ्यनुज्ञातं. —$^f$) Dd1 reads दूताः in marg. Dt1 संत्वरितं; G2 M1.2 ते त्वरिता( G2 °तं ) ( for संत्वरिता ). Ś1 Ñ2 V1 B1–3 D1–3.6 M4 ययुः शीघ्रपराक्र( Ś1 D6 °पुरोग )-माः; B4 जग्मुः कार्यवशाद्द्रुतं. —After 9, V1 B2 ( marg. ) Dg1 Dt1 Dd1 Dm1 D1–5.7 S ins. :

1584* न्यन्तेनापरतालस्य प्रलम्बस्योत्तरं प्रति ।
निषेवमाणास्ते जग्मुर्नदीं मध्येन मालिनीम् ।

[ ( l. 1 ) G3 अंतेन. Cv.r.m.g.k.t as above ( for न्य° ). T2 [ अ ]परतारस्य. V1 B2 D1–3 M4 प्रा( D2 M4 प्र )वेशनस्य मध्येन; D4.7 यलेनेद्वाचर तत( D7 °द्वांचरजलं ) ( sic ); D5 अंतरेणां-दरतलं ( for the prior half ). V1 B2 प्रलम्बस्य. V1 B2 D1–3 M4 [ उ ]त्तरेण च( D1 तु ); D4.5.7 [ अं ]तरं प्रति. ꣸ Ct : अपर-तालप्रलम्बौ पर्वताविति कतकतीर्थौ । ꣸ —( l. 2 ) D5 निमिषमाणास्; M4 निमेषमात्रं; Cv निषेव्यमाणा; Cr.m.g.k.t as above ( for निषेवमाणास् ). V1 B2 D1–5.7 M4 दूता ( for नदीं ). D4.7 मध्य-मिकां निशां; D5 मध्येन खाद्विलान्. ]

10 B4 om. 10. —$^a$) V1 Dt1 D1.3.4.7 T2 M4 हास्तिन-पुरे; Cr.m.g.k as in text. —$^b$) Dm1 वै प्राङ्मुखा; D1.5 प्रत्युन्मुखा; T3 प्रत्यन्मुखा ( sic ) ( for प्रत्य° ). Dg1 ययौ ( sic ). —For $10^{ab}$, Ś1 Ñ2 B1–3 D6 subst. :

1585* गत्वाथ हास्तिनपुरं गङ्गामुत्तीर्य वेगिताः ।

[ Ñ2 B3 च ( for [ अ ]थ ). Ñ2 हस्तिनपुरं. Ś1 D6 वेगतः ( for वेगिताः ). ]

—$^c$) Ś1 D6 पांचालदेशान्; Ñ2 V1 B1–3 Dt1 D1–3.5 Ct पंचालदेशम्( B2 °शान् ); T2 पांचालं देशम्; Cv.r.m.g.k as in text ( for पाञ्चालदेशम् ). Ś1 Ñ2 B1–3 D6 आजग्मुस्; D5 आगम्य ( for आसाद्य ). —B3 reads from $10^d$ up to जग्मुस्ते in l. 2 of 1587* in marg. —$^d$) Ś1 Ñ2 B1–3 D6 ततस्ते; D2 मध्ये च ( for मध्येन ). Ś1 D6 कुरुजांगलान्; B1.2 D1 °जंगलं; D3 कुरुतांगुलं ( sic ). —D4.5.7 read 12–$13^b$ after 10. —After 10, Ś1 Ñ2 V1 B1.2.3( marg. ) D1–3.6 M4 ins. :

1586* पूर्वेण वारुणीं तीर्त्वा कुरुक्षेत्रे सरस्वतीम् ।
त्वरमाणा ययुर्दूताः सुरम्यां पुष्करावतीम् ।

[ ( l. 1 ) V1 वरुणां. Ś1 D6 तीर्था( D6 °र्थं ) ( for तीर्त्वा ). B3 ( marg. also ) पूर्वो बली महातीर्थं ( sic ) ( for the prior half ). D2 M4 कुरुक्षेत्रं. —Ś1 Ñ2 B1–3 D6 om. l. 2. —( l. 2 ) D1 पुष्कलावतीं. D2 जग्मुः कार्यवशाद्द्रुतं; D3 सुरम्यपुष्करावतीं ( for the post. half ). ]

—Thereafter Ñ2 V1 B1–3 D1.3 M4 cont.; Dg1 Dt1

G. 2. 70. 13
B. 2. 68. 15
L. 2. 74. 0

ते प्रसन्नोदकां दिव्यां नानाविहगसेविताम् ।
उपातिजग्मुर्वेगेन शरदण्डां जनाकुलाम् ॥ ११
निकूलवृक्षमासाद्य दिव्यं सत्योपयाचनम् ।
अभिगम्याभिवाद्यं तं कुलिङ्गां प्राविशन्पुरीम् ॥ १२
अभिकालं ततः प्राप्य तेजोभिभवनाच्च्युताः ।
ययुर्मध्येन बाह्लीकान्सुदामानं च पर्वतम् ।
विष्णोः पदं प्रेक्षमाणा विपाशां चापि शाल्मलीम् ॥ १३

Dd1 Dm1 T G M1–3 Cv.r.m.g.k.t ins. after 10; D4.5.7 ins. after line 1 of 1588*:

1587* सरांसि च सुफुल्लानि नदीश्च विमलोदकाः ।
निरीक्षमाणा जग्मुस्ते दूताः कार्यवशाद्द्रुतम् ।

[ B3 reads in marg. up to जग्मुस्ते in l. 2 (cf. v.l. 10). —(l. 1) Ñ2 V1 B1–3 D1.3 च प्रफुल्लानि; Dd1 Dm1 विपुलान्येव; D4.5.7 च सुपुण्यानि; T1 च सुपूर्णानि; T3 च वि°; G1 फुल्लपद्मानि; M4 चाथ फुल्लानि (for च सु°). D4.7 नद्यश्च (for नदीश्च). —(l. 2) V1 B3 Dt1 Dd1 Dm1 D1.3–5 निरीक्ष्यमाणा; Cv.r.m.g as above. D1.3 जग्मुः (for दूताः). Ñ2 V1 B1–3 D1.3 M4 ते दू(B2 पू)ता जग्मुः; D4.5.7 दूतास्ते जग्मुः; T1.2 ते जग्मुर्दूताः (all by transp.) (for जग्मुस्ते दूताः).]

11 Ś1 D6 om. 11ab. —a) Ñ2 V1 B D1–3 M4 ते पुण्य(Ñ2 B2–4 °ण्यां)शीतसलि(V1 °लज)लां; D5 ते प्रसन्नोदका रम्या. —b) B2.4 D3 -नादितां; D5 -सेविताः (for -सेविताम्). —c) Dm1 T1.3 अतीत्य जग्मुर्; D4.5.7 उपाभि°; M4 उपाजग्मुर्हि; Cg.k.t as in text (for उपाति°). ❀ Cr: उपाजग्मुः उपगम्यातिक्रान्ता इत्यर्थः। ❀ —d) D4.7 शतद्रुं च (for शरदण्डां). Dg1 Dt1 Dd1 Dm1 D4.7 T1 जलाकुलां; M3 समाकुलान् (sic); M4 चलाचलां (for जनाकुलाम्). D5 सरितो झषाकुलाः. Ś1 Ñ2 V1 B D1–3.6 शरदंडां(V1 °ड्रां) समुत्तीर्य नदीं जलचरा(Ñ2 °ला)कुलां. —After 11, D4.5.7 ins. l. 2 of 1588*.

12 D4.5.7 read 12–13b after 10. —a) D4.7 निकूजं वृक्षम्; M4 निचूलवृक्षम्. Ś1 Ñ2 V1 B D1–3.6 स(V1 अ)-मूलं(Ś1 V1 D6 °ल) चैत्य(D2 °न)मासाद्य. —b) Ś1 Ñ2 V1 B D1–3.6 वृक्षं; M3 दिव्यां (sic) (for दिव्यं). V1 D1 सत्योपयाचितं; B3.4 सद्योपयाचनं; Dt1 Dm1 D4 सत्त्वोपयाचनं (D4 °चितं); D2 सत्योपपावनं; Cr.m.g.t as in text (for सत्योपयाचनम्). ❀ Cv: सत्योपायवचनं सत्यप्रार्थनं वरप्रदान-मिति यावत्। ❀ —c) V1 D1–3 M4 तं प्रणम्य; T1 अभिवाद्य (for अभिगम्य). Ś1 Ñ2 B D6 प्रणम्यैनं(B1 °वं); V1 D1–3 M4 [अ]थ(V1 °व; M4 °भि) गत्वा च; D4.7 [अ]तिमार्गेण (for [अ]भिवाद्यं तं). —d) Ś1 Ñ2 B D1–7 M4 भू(Ś1 D6 त्रि; D2 पु)लिंगां(M4 °गं); V1 T2 कलिंगां; T3 G1 °गान् (sic); M3 कुलिलां (for कुलिङ्गां). Ś1 Ñ2 V1 B D1–3.6 विविशुः (for प्राविशन्).

13 D4.5.7 read 12–13b after 10. —a) Ś1 Ñ2 B D6 अजकूलां(Ś1 D6 °लं); V1 D1–4 आ(V1 D4 अ)जीकुलं; D5 आभीकूलं; D7 नदीकालं; G3 अपि कालं; M3 अहिकालं; M4 अजाकूलं (for अभिकालं). —b) Ś1 B M4 बोधी(Ś1 B2 °धा; B4 °ध; M4 °धि)नां नगरं ययुः; Ñ2 V1 D6 राधीनां(V1 वाधनी-; D6 वौद्धानां) नगरं ययुः; Dg1 ते वीधिभ°; D1–3 बोधि(D1 बोध)नीनगरं ययुः; D5 तेजोभिभवनं ततः; T2.3 G M1–3 ते वोधिभवनाच्च्युताः. Cmp as in text; Ctp ततो योधिवनच्युताः. ❀ Cr: तेजो बोधिभवनं ग्रामं ततश्च्युताः। ❀ —After 13ab, V1 B1.3.4 Dg1 Dt1 Dd1 Dm1 D1–3 S Cv.r.m.g.k.t ins.; D4.5.7 ins. l. 1 after 13ab and l. 2 after 11:

1588* पितृपैतामहीं पुण्यां तेरुरिक्षुमतीं नदीम् ।
अवेक्ष्याञ्जलिपानांश्च ब्राह्मणान्वेदपारगान् ।

[(l. 1) ❀ Ct: पितृपैतामहीमित्यार्षम्। ❀ V1 B1.3.4 D1–3 M4 ततो देव(V1 मह)र्षिचरितां (for the prior half). V1 B1.3.4 D1–3 M4 ययुर् (for तेरुर्). V1 इक्षुवतीं (sic); B1.3 इंदु°; D4.7 चेक्षु(D4 °क्ष्यु)मतीं (for इक्षु°). —After l. 1, D4.5.7 ins. 1587*. —(l. 2) D4.7 नागवृक्षांश्च पश्यंतो; D5 अश्मभक्षाञ्शिलादांश्च; Cvp अपेक्ष्यांजलिपानांश्च (for the prior half). V1 B1.3.4 D1–3 तत्रा(B3 °तो)भिगम्य संसिद्धान्वेदवेदांग-पारगान्; M4 अथ तत्रापि संसिद्धा वेदवेदांगपारगाः. ]

—V1 B1.3.4 D1–3 M4 cont.; Ś1 Ñ2 B2 D6 ins. only l. 2 after 13ab:

1589* ब्राह्मणान्प्रययुः शीघ्रमनुज्ञाताः श्रुताशिषः ।
कथयन्तः कथाश्चित्रा रामलक्ष्मणसंहिताः ।

[(l. 1) B4 अनुज्ञातान्. D3 कृताशिषः; G(ed.) शुभाशिषः (for श्रुता°). M4 ब्राह्मणाः पर्ययुः शीघ्रमनुज्ञाताः शतायुषः. —(l. 2) V1 D1–3 कथाः स्निग्धा. V1 D1–3 M4 -संश्रिताः (for -संहिताः).]

—cd) B4 वाल्मीकान्; M3 बा ** (for बाह्लीकान्). Ñ2 V1 B D1–3 सुदामांश्चो(V1 D1.2 °मं चो; D3 °नं *)त्तरेण च (V1 D1.3 ते; D2 तु); D4.7 अरण्यं स्वादुसंचितं; D5 आरण्या-न्फलसंयुतान्; M4 अरण्यस्वादुधातकीन् (for d). Ś1 D6 ययुर्मध्येतिवेगेन शतरुद्रां जलाकुलां. —e) Ck पादं (for पदं). Ś1 D4–7 वीक्ष्य(Ś1 °क्ष)माणा; Ñ2 B4 T1.3 G1 प्रेक्षमाणाः (B4 G1 °णां); V1 क्षेममाणा (sic); Dd1 Dm1 D3 प्रेक्ष्य°; D1 प्रेप° (for प्रेक्ष°). —f) Ñ2 B विपाश्वें; T2.3 विशालां; M4 विपाश्वां (for विपाशां). Ś1 D6 चैव; Ñ2 B न च (for चापि). Ś1 D6 G M शाल्मलीं(M3 °लिं) (for शाल्मलीम्). —After 13, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.:

1590* नदीर्वापीतटाकानि पल्वलानि सरांसि च ।
पश्यन्तो विविधांश्चापि सिंहव्याघ्रमृगद्विपान् ।
ययुः पथातिमहता शासनं भर्तुरीप्सवः ।

ते श्रान्तवाहना दूता विकृष्टेन सता पथा ।
गिरिव्रजं पुरवरं शीघ्रमासेदुरञ्जसा ॥ १४

भर्तुः प्रियार्थं कुलरक्षणार्थं
भर्तुश्च वंशस्य परिग्रहार्थम् ।
अहेडमानास्त्वरया स्म दूता
रात्र्यां तु ते तत्पुरमेव याताः ॥ १५

G. 2. 70. 20
B. 2. 68. 22
L. 2. 74. 17

इति श्रीरामायणे अयोध्याकाण्डे द्विषष्टितमः सर्गः ॥६२॥

[ (l. 1) Dt1 T2 G1.2 M1.2 वापीस्; Dm1 G3 वा( G3 चा )-पि ( for वापी- ). G3 तटाकांश्च ( for -तटाकानि ). T1 **लानि ( for पल्व° ).—(l. 2) Dt1 om. from the post. half up to विकृष्टे in $14^{b}$. Dd1 -द्विजान् ( for -द्विपान् ).]

14 Dt1 om. up to विकृष्टे in b ( cf. v.l. 13 ). V1 D1.2 M4 om. $14^{ab}$. Ś1 Ñ2 B D3–7 transp. $14^{ab}$ and $14^{cd}$.—a) Dg1 M2 क्लांत- ( for श्रान्त- ). T3 -वहना ( for -वाहना ). Ś1 Ñ2 B D6 सप्तरात्रेण गत्वा वै( Ś1 D6 च गता ); D3–5.7 प्रययुः सप्तमीं रात्रिं.—b) Dd1 Dm1 T1.3 G2 M1 पथा सता ( by transp. ); M2 पथा ततः. Ś1 Ñ2 B D3–7 दूतास्ते श्रांत( D3.5 शीघ्र )वाहनाः. Ctp सप्तरात्रेण गत्वा वै दूतास्ते श्रांतवाहनाः.—After $14^{ab}$, D4.5.7 ins.:

1591* सप्तरात्रेण ते तत्र गत्वा राजगृहं वरम् ।

[ D5 गता. D4.7 वलं ( sic ) ( for वरम् ).]

—c) Ś1 -चरं ( for -व्रजं ).—d) Ś1 Ñ2 V1 B D1–3.6 M4 विविशुर्न चिरादिव; D4.5.7 शीघ्रं ते विविशुस्तदा.—After 14, Dm1 ins. राम.

15 a) Ś1 Ñ2 V1 B D1–3.6 M4 प्रजा( D1 प्रिया )हितार्थं ( for भर्तुः प्रि° ). Ñ2 lacuna; V1 D1–3 M4 नृपतेः प्रिया( M4 °तेर्हिता )र्थं ( for कुलरक्षणार्थं ).—b) V1 D1–3 M4 भर्तुः स्ववंशस्य च रक्षणार्थं.—c) T3 मरया ( corrupt ) ( for त्वरया ).—For $15^{cd}$, Ś1 Ñ2 V1 B D1–7 M4 subst. and Ś1 D6 read before $15^{ab}$:

1592* अतित्वरन्तो विविशुः पुरं ते
ततो ययुः पार्थिववेश्म तूर्णम् ।

[ (l. 1) Ś1 D4.6.7 संपूज्यमाना; B2 D1–3 M4 अभित्वरंतो; D5 प्रविश्यमाना ( for अतित्वरन्तो ). Ś1 D6 हि ते; D1.2 च ते; D3 च; D4.5.7 तत् ( for ते ).—(l. 2) B1.4 D4.5.7 ततोभ्ययुः ( for ततो ययुः ). Ś1 D6 मुख्यं ( for तूर्णम् ).]

Colophon.—*Sarga name*: Ś1 Ñ2 B D1 दूत( Ś1 भरत )प्रस्थापनं( B1.2 °ना; D1 °नः ); V1 दूतागमनः; D2 दूतप्रस्थानिकः; D3 भरतदूतप्रस्थानः; D4 दूतप्रेषणं; D5 भरतं प्रति दूतप्रस्थापनः; D6 दूतप्रस्थानं; D7 भरतदूतप्रस्थानिकः.—*Sarga no.* ( figures, words or both ): B1 D3.6 om.; Ś1 74; Ñ2 V1 D7 M4 70; B2 Dg1 Dt1 Dd1 Dm1 T G M1–3 68; B3 D4 69; B4 64; D1 126; D2.5 73.—After colophon, D6 G conclude with श्री( D6 om. श्री )-रामाय नमः; T2 with श्रीरामचन्द्रायनमः.

# ६३

G. 2. 71. 1
B. 2. 69. 1
L. 2. 75. 1

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् ।
भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥ १
व्युष्टामेव तु तां रात्रिं दृष्ट्वा तं स्वप्नमप्रियम् ।
पुत्रो राजाधिराजस्य सुभृशं पर्यतप्यत ॥ २
तप्यमानं समाज्ञाय वयस्याः प्रियवादिनः ।
आयासं हि विनेष्यन्तः सभायां चक्रिरे कथाः ॥ ३
वादयन्ति तथा शान्तिं लासयन्त्यपि चापरे ।
नाटकान्यपरे प्राहुर्हास्यानि विविधानि च ॥ ४
स तैर्महात्मा भरतः सखिभिः प्रियवादिभिः ।
गोष्ठीहास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ॥ ५
तमब्रवीत्प्रियसखो भरतं सखिभिर्वृतम् ।
सुहृद्भिः पर्युपासीनः किं सखे नानुमोदसे ॥ ६

## 63

☞ Ñ1 missing for Sarga 63 ( cf. v.l. 1058* ). Dm1 begins with ॐ; M1.2 with श्रीरामाय नमः.

1 $^{ab}$) Dg1 D4.5.7 G1 दूतास्ते ( by transp. ) ( for ते दूताः ). D4.7 प्रवेष्टारः ( for प्रविशन्ति ). Ś1 Ñ2 V1 B1.2 ( marg. also ).3 D1–3.6 M4 यमेव दिवसं दूताः प्रविष्टास्ते ( B2 °स्तु ) गिरिव्रजं; B2.4 यस्यामेव तु शर्वर्यामयोध्याधिपतिसृतः. —$^{c}$) D2 पिता ( for [ अ ]पि तां ). B3 रात्रीं; D2 रात्रौ ( for रात्रिं ). —$^{d}$) V1 D1.3–5.7 दृष्टः स्वप्नो ( by transp. ); D2 दृष्टः स्वप्नेः; T3 स्वप्ने दृष्टो ( for स्वप्नो दृष्टो ). Ś1 Ñ2 V1 B D1–7 भयावहः; M4 भृशाप्रियः ( for ऽयमप्रियः ).

2 $^{a}$) Dm1 D5 व्युष्टायामेव; G1 °व च ( for व्युष्टामेव तु ). Dm1 राज्यां ( for रात्रिं ). —$^{b}$) D4.7 स्वप्नमथाप्रियं ( for तं स्व° ). —$^{c}$) M3 राज्याधिराजस्य. —$^{d}$) G1 परितप्यत ( sic ). —For 2, Ś1 Ñ2 V1 B D1–3.6 M4 subst. :

1593* अनिष्टावेदिनं स्वप्नं दृष्ट्वा च भरतस्तदा ।
संस्मरन्पितरं वृद्धमासीदुत्सुकमानसः ।

[ ( l. 1 ) Ś1 अरिष्टावेदिनं; V1 अनिष्टावेदितं; B1 D2 अनिष्टवेदिनं; D6 अरिष्टवेदनं; M4 अनिष्टवेदनं ( for अनिष्टावेदिनं ). Ś1 D6 [ अ ]-थ; B4 तु ( for च ). V1 D1–3 M4 तं( D3 * ) दृष्ट्वा ( for दृष्ट्वा च ). —( l. 2 ) V1 वस्त्वेकमानसः ( sic ); B4 असुख°; M4 दुःखित° ( for उत्सुक° ). ]

3 $^{a}$) Dt1 G1 तमाज्ञाय ( for समा° ). Ś1 Ñ2 V1 B1–3 D1–3.6 M4 आलक्ष्य त( Ñ2 B1.3 चा )स्योत्सुकतां( D3 °स्योत्पुलकतां [ hypm. ] ); B4 आलोक्य तस्यासुखतां. —$^{b}$) D3 प्रियावादिनः. —$^{c}$) D2 उगांस ( sic ) ( for आयासं ). Ś1 Ñ2 V1 B D4–7 अप( B2 उप; D4.7 प्रति; D5 प्रवि )नेष्यंतः; Dg1 Dt1 Dd1 T2 G1.2 M2–4 Ck.t विनयिष्यंतः; Dm1 T3 G1.2 M1 विनशिष्यंतः; D1–3 वि( D2 * )हरिष्यंतः; Cr व्यनयिष्यंतः ( for हि विनेष्यन्तः ). —$^{d}$) G3 कथयांचक्रिरे. Ś1 Ñ2 V1 B D1–7 M4 कथाश्च( B1.2 कथां च; D4.7 वार्ताश्च )-क्रुरुत्तमाः( Ñ2 B3 °नंतराः; B2 °नुत्तमां; M4 °नेकशः ).

4 $^{a}$) Dt1 Dd1 Dm1 तदा ( for तथा ). D4.5.7 गांति ( sic ); T1.3 चान्ये( T3 °न्याः ) ( for शान्तिं ). —$^{b}$) Dt1 Dd1 M3 लालयंति; Cv.r.m.g.t as in text; Ck.tp लोलयंति ( for लासयन्ति ). Dd1 Dm1 T3 G2 M1 [ अ ]परे तथा( T3 °दा ); M2 तथापरे ( for [ अ ]पि चापरे ). D4.5.7 नृत्यंति च हसंति च. —For 4$^{ab}$, Ś1 Ñ2 V1 B D1–3.6 M4 subst. :

1594* अवादयञ्जगुश्चान्ये ननृतुर्जहसुस्तदा ।

[ B4 D2.3 अवे( B4 D3 आवा )दयन्. V1 जहसुर्ननृतुस् ( by transp. ). Ś1 D1.6 M4 तथा ( for तदा ). ]

—$^{c}$) B4 नटनानि; D1.4.7 M4 नाटकान् ; Cr नाटकादि ( for नाटकानि ). Ś1 Ñ2 V1 B D1–7 चक्रुर् ; Dt1 M3 Ck स्माहुर्; Ct आहुः ( for प्राहुर् ). —$^{d}$) T1 लास्यानि ( for हास्यानि ). Dd1 Dm1 [ अ ]पि ( for च ).

5 Dg1 om. 5$^{ab}$. —$^{a}$) D4.5.7 वै ( for तैर् ). —$^{b}$) D4 T2 G3 M3 सखीभिः; G2 सुखिभिः ( for सखिभिः ). —$^{d}$) Dd1 Dm1 न प्रहृष्यत; D4 निःप्रहृष्टोति; D7 G3 न प्रहृष्य ( G3 °ष्यं )ति ( for न प्रा° ). —For 5, Ś1 Ñ2 V1 B D1–3.6 M4 subst. :

1595* प्रियैर्वयस्यैर्भरतस्तथापि प्रियवादिभिः ।
हास्यानि चैव कुर्वद्भिर्नैवातुष्यत्सुदुर्मनाः ।

[ ( l. 1 ) V1 D1–3 [ अ ]ति-; B2.4 [ ए ]व ( for [ अ ]पि ). V1 प्रियवादिनः. —( l. 2 ) Ś1 D6 [ ए ]वं ( for [ ए ]व ). V1 कुर्वंति ( for कुर्वद्भिर् ) . V1 D1–3 M4 हृ( D3 दृ; M4 तु )ष्यति दुर्मना: ( for [ अ ]तुष्य° ). ]

6 $^{a}$) D4.5.7 अथ ( for तम् ). B1 प्रियसखं ( for °खो ). —$^{b}$) G3 युतं ( for वृतम् ). Ś1 Ñ2 V1 B D1–3.6 M4 कश्चिद्व्यथित( D1 °द्वित्रस्त; M4 °दुत्सुक )मानसः. —$^{c}$) D4.7 सखिभिः ( for सुहृद्भिः ). Dd1 पर्युदासीनः; G2.3 M1–3 पर्युपासीनं. —$^{d}$) T2 सखे किं ( by transp. ). D4.5.7 प्रहृष्यसि ( D5 °ति ) ( for [ अ ]नुमोदसे ). —For 6$^{cd}$, Ś1 Ñ2 V1 B D1–3.6 M4 subst. :

1596* उपास्यमानः सखिभिः किं सखे न प्रहृष्यसि ।

[ Ś1 D6 [ ए ]व हृष्यसि; D3 M4 प्रहृष्यति( M4 °से ) ( for प्रहृष्यसि ). ];

and then cont. :

1597* समानसुखदुःखानामस्माकमपि राघव ।
दुःखमार्तिकरं यत्ते तत्ख्यापयितुमर्हसि ।

एवं ब्रुवाणं सुहृदं भरतः प्रत्युवाच ह ।
शृणु त्वं यन्निमित्तं मे दैन्यमेतदुपागतम् ॥ ७
स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम् ।
पतन्तमद्रिशिखरात्कलुषे गोमये ह्रदे ॥ ८
प्लवमानश्च मे दृष्टः स तस्मिन्गोमयह्रदे ।
पिबन्नञ्जलिना तैलं हसन्निव मुहुर्मुहुः ॥ ९
ततस्तिलोदनं भुक्त्वा पुनः पुनरधःशिराः ।
तैलेनाभ्यक्तसर्वाङ्गस्तैलमेवावगाहत ॥ १०
स्वप्नेऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि ।
सहसा चापि संशान्तं ज्वलितं जातवेदसम् ॥ ११

G. 2. 71. 16
B. 2. 69. 12
L. 2. 75. 16

[(l. 1) M4 समानः. D3 om. (hapl.) सुहृदः. B2.4 इति (for अपि). D1 राघवः. —(l. 2) V1 D1–3 M4 अंतर्गतं; B4 आर्तकरं (for आर्तिकरं). V1 उत्- (for तत्). Ś1 D6 व्यपोहितुम् (for ख्यापयितुम्).]

7 $^a$) Dg1 T1.2 G1.3 M3 संहृष्टं (for सुहृदं). —$^b$) Dm1 marg.; T2 तं; G2 हा (for ह). —$^c$) G3 शृण्वंतु (for शृणु त्वं). —$^d$) T2 उपस्थितं (for उपागतम्). —For 7, Ś1 Ñ2 V1 B D1–3.6 M4 (all followed by l. 1–2 of 1604*) subst.:

1598* इत्युक्तो भरतस्तेन प्रत्युवाच महायशाः ।
शृणुध्वं यो मया दृष्टः स्वप्नो येनास्मि दुर्मनाः ।

[(l. 1) V1 तैस्तु (for तेन). M4 महामनाः (for °यशाः). —M4 om. (hapl.) l. 2. —(l. 2) D3 [अ]स्ति (for [अ]स्मि). Ś1 D6 दुःखितः (for दुर्मनाः).]

—For 7, D4.5.7 (all followed by 11$^{ab}$ and l. 1 of 1602*) subst.:

1599* भरतस्तु तथा पृष्टः प्रत्युवाच महायशाः ।
तं स्वप्नं निखिलं सर्वं वयस्येष्वनुपूर्वशः ।

8 $^a$) D4.5.7 पितरं चाहम् (for स्वप्ने पितरम्). Dg1 अद्राक्ष्यम् (for °क्षं). —$^b$) Dg1 उन्नतं; G1 उन्मुक्तं; M3 उन्मत्तं (for मलिनं). —For 8$^{ab}$, Ś1 Ñ2 V1 B D1–3.6 M4 subst.:

1600* अद्राक्षमपि च स्वप्ने पितरं रक्तवाससम् ।
कृष्यमाणं नरैर्बद्ध्वा दक्षिणामभितो दिशम् ।
पुनश्चाप्येनमद्राक्षं स्नेहाक्तं मुक्तमूर्धजम् ।

[(l. 2) V1 B3 हृष्यमाणं. B4 एवं (for बद्ध्वा). —(l. 3) M4 पुनश्चैव तथाद्राक्षं (for the prior half).]

—$^c$) V1 निपतितं शिखराग्राद्. —$^d$) Ś1 Ñ2 V1 B D1–3.6 M4 अगाधे (for कलुषे). Ñ2 D4.6 T गोमयह्रदे; D2 गोमयेऽद्रुते; D3 *** ह्रदे.

9 V1 D4.5.7 M4 om. (hapl.) 9$^{ab}$. —$^a$) Cr प्लवमानं; Cg as in text (for प्लवमानश्च). G3 सं- (for मे). —$^b$) G1 कस्मिंश्चिद् (for स तस्मिन्). Dg1 Dt1 Dd1 Dm1 G1.2 M1.2 Ct गोमये ह्रदे. —For 9$^{ab}$, Ś1 Ñ2 B D1–3.6 subst.:

1601* तस्मिन्निमग्नश्चोन्मज्ज्य दृष्टो मे गोमयह्रदात् ।

[D1–3 निमज्जश्च (for निमग्नश्च). Ñ2 B1.3 D2.3 [उ]न्मज्जन् (for [उ]न्मज्ज्य). B गोमयाध्द्रदात्; D1–3 कर्दमे ह्रदे.]

—B3 om. 9$^d$–10. —$^d$) Ñ2 V1 B1.2 D1.2 M4 ह (B2 हा)-समानः; B4 समानं च; T1 हसन्नपि (for हसन्निव). Ś1 Ñ2 V1 B1.2.4 D1.2.6 M4 पुनः पुनः. D3 हसमा* **नः (damaged).

10 B3 om. 10 (cf. v.l. 9). —$^a$) Ś1 Ñ2 V1 B1.2.4 D1–3.6 तै( V1 D1–3 ति )लोदकं पीत्वा; D4.7 तैलोदनं भुक्त्वा; M3 त्रिलोचनं (sic) भुक्त्वा; Ck.t as in text. ❀ Cg: तिलमिश्र ओदनः तिलौदनः। ❀ —$^b$) D4 मुहुर्मुहुर् (for पुनः पुनर्). Ñ2 D4.7 अवाक्शिराः; D1 अधीश्वरः; D3 अधोमुखैः (for अधःशिराः). —$^c$) Ś1 D6 [आ]सिक्त- (for [आ]-भ्यक्त-). D3 तैलोभक्त सगांवांग (corrupt). —$^d$) Ś1 D6 [अ]वगाहयन्; Ñ2 B1.2.4 D2.3 M3 व्यगाहत; V1 D1.4.5.7 [अ]भ्यगाहते; Dg1 [अ]विगाहतः; Dt1 Dm1 Ct [अ]-न्वगाहत; D5.7 [अ]वगाहते; M4 विगाहते; Ck as in text (for [अ]वगाहत).

11 D4.5.7 read 11$^{ab}$ (followed by l. 1 of 1602*) after 1599*. —$^a$) D4.5 स्वप्नेहं; D7 सस्नेहं; G2 स्वप्नोपि; M3 स्वप्ने च (for स्वप्नेऽपि). —After 11$^{ab}$, Dg1 Dt1 Dd1 Dm1 D4.5.7 T G M1–3 ins.:

1602* उपरुद्धां च जगतीं तमसेव समावृताम् ।
औपवाह्यस्य नागस्य विषाणं शकलीकृतम् ।

[(l. 1) Cv.m.g.k.t as above; Cr उपरुद्धं (for उपरुद्धां). T3 पृथिवीं (for जगतीं). T2 G1 [प]व (for [इ]व). D4.5.7 om. from घनेन तमसावृतां (for the post. half). —D4.5.7 om. from l. 2 up to st. 12. —(l. 2) Dm1 विषण्ण-; G1 शिरश्च (for विषाणं).]

—G1 cont.:

1603* सोपाश्रयं सोपधानं सतल्पं सोत्तरच्छदम् ।
दृष्टमान्दोलिकं राज्ञो मया भग्नं सुभूषितम् ।
प्रारोहावंकणे वृद्धौ स्वयं तातेन भूरुहौ ।
सह वल्लया परित्यक्तौ मया दृष्टौ फलागमे ।

—$^c$) Dg1 G2.3 M1–3 संशुष्कां( M3 °ष्कं ); Dt1 Dd1 Dm1 संशाता (for संशान्तं). —$^d$) Dg1 Dt1 Dd1 Dm1 G M1.2 ज्वलितां( Dt1 Dd1 Dm1 Ct °ता ) (for °तं ). Dg1 G2.3 M1 Cg जातवेदसा; Dt1 Dd1 Dm1 M2 °सः. —For 11, Ś1 Ñ2 V1 B D1–3.6 M4 (all read l. 1–2 after 1598* and l. 3–4 [followed by 1605*] after 14) subst.:

G. 2. 71. 17
B. 2. 69. 13
L. 2. 75. 17

अवदीर्णां च पृथिवीं शुष्कांश्च विविधान्द्रुमान् ।
अहं पश्यामि विध्वस्तान्सधूमांश्चैव पर्वतान् ॥ १२
पीठे कार्ष्णायसे चैनं निषण्णं कृष्णवाससम् ।
प्रहसन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ॥ १३
त्वरमाणश्च धर्मात्मा रक्तमाल्यानुलेपनः ।
रथेन खरयुक्तेन प्रयातो दक्षिणामुखः ॥ १४

एवमेतन्मया दृष्टमिमां रात्रिं भयावहाम् ।
अहं रामोऽथ वा राजा लक्ष्मणो वा मरिष्यति ॥ १५
नरो यानेन यः स्वप्ने खरयुक्तेन याति हि ।
अचिरात्तस्य धूमाग्रं चितायां संप्रदृश्यते ।
एतन्निमित्तं दीनोऽहं तन्न वः प्रतिपूजये ॥ १६

1604* दृष्टो मयाद्य सुप्तेन चन्द्रमाः पतितः क्षितौ ।
संशुष्कः सागरश्चैव सूर्यो ग्रस्तश्च राहुणा ।
प्रदीप्तमम्भसा शान्तं दृष्टवानस्मि पावकम् ।
सीदन्तं च तथाद्राक्षं पङ्के मग्नं महागजम् ।

[ (l. 1) Ś1 V1 B1.2.4 D1.3.6 स्वप्नेन (for सुप्तेन). D2 दृष्टस्त्वथ मया स्वप्ने (for the prior half). V1 D1–3 M4 भुवि (for क्षितौ). —(l. 3) D3 न गतं (hypm.) (for शान्तं). —(l. 4) V1 D1–3 M4 सीदमानं (for सीदन्तं च). Ś1 D6 ततो; B1 तदा (for तथा). Ś1 बद्धलग्न-; D6 बंधलग्नं (for पङ्के मग्नं). M4 यथा गजं. ]

12 D4.5.7 om. 12 (cf. v.l. 1602*). —$^a$) Dg1 G3 M2.3 Cg अवतीर्णां; Cm*p*.t as in text (for °दीर्णां). —$^b$) G2 विशुष्कान् (for शुष्कांश्च). —$^c$) M3 च ध्वस्तान् (for विध्व°). —$^d$) T1 M2 [ श ]पि (for [ ए ]व). G1 धूमांश्चैव सपर्वतान्. —For 12, Ś1 Ñ2 V1 B D1–3.6 M4 subst. and read after 1604*:

1605* विशीर्यमाणः शैलेन्द्रो भग्नश्चैत्यमहाद्रुमः ।
स्वप्ने चाद्य मया दृष्टो निपतंश्च महाध्वजः ।

[ (l. 1) B1 *लेंद्रो (for शैलेन्द्रो). D1 भग्नाश्च. Ś1 D6 चैव; V1 B4 D1–3 M4 चैत्यो( D1 °त्ये ) (for चैत्य-). G( ed.) -महाद्रुमाः. —(l. 2) V1 D1–3 चायं; B2.3( also ).4 नाथ (for चाद्य). Ś1 D6 पतितश्च; V1 D1–3 M4 पतमानो (for निपतंश्च). ]

13 B om. 13$^a$. —$^a$) D1 M3 पीठे कृष्णायसे; D3 ***ष्णायसं (illeg.) (for पीठे का°). V1 चैलं; Dt1 D4.5.7 M4 चैव (for चैनं). —$^b$) Ñ2 V1 Dg1 D2 विषण्णं (for नि°). M4 रक्त- (for कृष्ण-). —$^c$) V1 संहसंति; Dt1 Dd1 Dm1 T3 G1 प्रहरंति; D1 प्रसहंति; T1.2 प्रवहंति; G3 प्रससंति (sic) (for प्रहसन्ति). Ś1 B1 D4 च; B4 स (sic) (for स्म). D4.7 प्रहसन्निव.

14 Dd1 Dm1 G2 M1 transp. 14$^{ab}$ and 14$^{cd}$. —$^{ab}$) Ś1 Ñ2 V1 B D1.3.6 M4 दृष्टो रासभयुक्तेन रथेन च पिता मया; D2 दृष्टो ममाद्य संयुक्तो रासभेन पिता मया. —$^c$) Ś1 Ñ2 V1 B D1–3.6 M4 रक्तमाल्यांबरधरः( D3 °** ). —$^d$) D4.5.7 T2.3 प्रययौ( T2.3 °तो ) (for प्रयातो). V1 दक्षिणाभिमुखः (hypm.); D1 °णोन्मुखः; M3 °णां दिशं( also °णामुखः ). —After 14, Ś1 Ñ2 V1 B D1–3.6 M4 read l. 3–4 of 1604* and 1605*; while Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.:

1606* प्रहसन्तीव राजानं प्रमदा रक्तवासिनी ।
प्रकर्षन्ती मया दृष्टा राक्षसी विकृतानना ।

[ (l. 1) G3 च (for [ इ ]व). —(l. 2) M3 प्रकर्षयंती (hypm.). ]

15 D4.5.7 transp. 15 and 16. —$^a$) G3 एव (for एतन्). T2 दृष्टाम्. —$^b$) T3 G1.2 M1–3 भयावहं. —$^c$) D7 om. वा (subm.). —$^d$) D4.7 G2 गमि( G2 करि )ष्यति (for मरि°). —For 15, Ś1 Ñ2 V1 B D1–3.6 M4 subst.:

1607* एवमेष मया स्वप्नो दृष्टः पापो भयावहः ।
व्यक्तं रामोऽथ वा राजा प्राणांस्त्यक्त्वा दिवं गतः ।

[ (l. 1) Ś1 V1 B2 एव (for एष). B4 M4 दृष्टः स्वप्नः (by transp.). Ś1 Ñ2 B पाप- (for पापो). —(l. 2) D1 तथा (for ऽथ वा). Ñ2 B3.4 राजा वा (by transp.). ]

16 D4.5.7 transp. 15 and 16. —$^{ab}$) Dg1 G1 M3 ह (for हि). D4.5.7 नरश्च भुवि( D5 नरः स्वप्ने तु ) यः कश्चित्खरयानेन गच्छति. —$^c$) D4.5.7 नचिरात्. Dt1 Dd1 Dm1 Ct धूम्राग्रं; Cg as in text (for धूमाग्रं). —$^d$) D4 G2 M1 प्रति ( D4 तस्य )दृश्यते (for संप्र°). —For 16$^{a-d}$, Ś1 Ñ2 V1 B D1–3.6 M4 subst.:

1608* यो हि रासभयुक्तेन रथेन परिकृष्यते ।
मर्त्यः स नचिरादेव ध्रुवं याति यमक्षयम् ।

[ (l. 1) D2 रामस्त्वभुक्तेन (corrupt). V1 D1–3 M4 याने ( D3 ** )न (for रथेन). Ñ2 परिहृष्यते. —(l. 2) Ś1 D6 मृतः; V1 M4 मन्ये (for मर्त्यः). V1 D3 स त्वचिरादेव; D6 स तु चिरादे*; M4 तमचिरा° (for स नचिरादेव). ]

—After 16$^{cd}$, G1 ins.:

1609* त्यज्यमानो यदि तरुर्दृष्टो हि फलसंभवे ।
राजा वा युवराजो वा तद्राष्ट्रं परिवर्जयेत् ।

—D4.5.7 om. 16$^e$–17. —$^e$) Ñ2 एतस्मिन् (hypm.). M3 एवंनिमित्तं. —$^f$) Dg1 G1.3 M2.3 न च( M3 तु ) वः; Dt1 Dd1 Dm1 T2.3 G2 M1 न वचः (for तन्न वः). Dd1 प्रतिपूजते; G2 प्रति पिप्रिये (sic); Ct as in text (for °पूजये) ❁ Ck: युष्माकं वचः प्रति उद्दिश्य न पेप्रिये न भृशं प्रीतो भवामि ।; Ct: न प्रति पेप्रिये इति पाठे युष्माकं वचः प्रति न येन भृशं प्रीतो भवामीत्यर्थः । ❁ Ś1 Ñ2 B1–3 D1–3.6 M4 नाभिनं( Ś1 °वं )दामि वो( B1 ते ) वचः; V1 नाभिनंदसि वो वचः; B4 नानंदामि च वो वचः. —After 16, Ś1 Ñ2 V1 B D1–3.6 M4 ins.:

शुष्यतीव च मे कण्ठो न स्वस्थमिव मे मनः ।
जुगुप्सन्निव चात्मानं न च पश्यामि कारणम् ॥ १७
इमां हि दुःस्वप्नगतिं निशाम्य ता-
मनेकरूपामवितर्कितां पुरा ।
भयं महत्तद्धृदयान्न याति मे
विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ १८

G. 2. 71. 23
B. 2. 69. 21
L. 2. 75. 23

इति श्रीरामायणे अयोध्याकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

1610* हृष्टांश्च नानुहृष्यामि चिन्तयन्स्वप्नदर्शनम् ।

[ Ś1 D6 हर्षस्थाने न हृष्यामि; Ñ2 B3 °श्च नानुकृष्यामि; V1 हृष्टांश्चैनान्न हृष्यामि; B2 °पश्यामि (for the prior half). M4 विचिंत्य ( for चिन्तयन् ). ]

**17** D4.5.7 om. 17 (cf. v.l. 16). —$^{b}$) Dg1 स्वस्थ इव (sic). —After $17^{ab}$, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

1611* न पश्यामि भयस्थानं भयं चैवोपधारये ।
भ्रष्टश्च स्वरयोगो मे छाया चोपहता मम ।

[ (l. 2) Dg1 Dt1 Ct चापगता; T2 [ अ ]प्युपहता; T3 नोपहता (sic) ( for चोपहता ). ]

—$^{cd}$) Dm1 जिगुप्स्यन्निव (sic); T1.2 G2 M1.3 Ct जुगुप्स इव; G1 M2 जुगुप्सामीव; Cm.g.k.tp as in text ( for जुगुप्सन्निव ). —For 17, Ś1 Ñ2 V1 B D1–3.6 M4 subst. :

1612* अस्थाने चापि सोत्कण्ठं मनो विह्वलतीव मे ।
अस्थाने व्यथितश्चायं देहे देहेश्वरो मम ।
हतत्विषमिवात्मानमपि चाद्योपलक्षये ।
जुगुप्सामि तथात्मानमकस्मात्पतितं यथा ।

[ (l. 1) B4 अस्थानेषु; D3 °ने वा ( for °ने च ). —(l. 2) V1 व्यथितश्चास्मिन्; D2 व्यथितात्मापि; D3 °श्चाद्य. D2 चायं ( for देहे ). V1 देवदेवेश्वरो यथा. —(l. 3) V1 गत- ( for हत- ). B3 -द्विषम् ( for -त्विषम् ). Ś1 D6 अद्य; D2 परि ( for अपि ). Ś1 D6 चैवोपलक्षये; B4 चाप्यु°. —(l. 4) V1 D2.3 जुगुप्स्यामि; B3 जुगुप्सोमि (sic) ( for जुगु° ). Ñ2 V1 B3 D1–3 M4 [ इ ]व चात्मानम्; B1 हि चा° ( for तथा° ). V1 नकस्मात् ( for अकस्मात् ). ]

**18** $^{a}$) Dt1 D4.5.7 T2 च ( for हि ). M3 इमानि ( for इमां हि ). Dg1 Dt1 Dd1 Dm1 T3 G2.3 M1.2 Ct निशम्य; D4.5.7 निरीक्ष्य; Ck as in text ( for निशाम्य ). Dt1 T2 Ct हि; D4.5.7 om.; M3 ह ( for ताम् ). —$^{b}$) Dt1 T2 M3 त्वनेक-; D5 ह्यने°; Ct as in text ( for अनेक- ). D4.5.7 अनचिंति( D5 अविचिंत्य )तां; T2 G1 M3 Cr.m न वितर्कितां; Cg as in text ( for अवितर्कितां ). D4.7 पुरीं (sic) ( for पुरा ). —$^{cd}$) T2 -पौरुषं ( for -दर्शनम् ). D4.5.7 भयं महन्मे ( D5 भयावहं मे ) हृदयं न मुंचते( D4 मुच्यते; D5 शुष्यति ) प्रगृह्य बाहुं विलपाम्यनाथवत्. —For 18, Ś1 Ñ2 V1 B D1–3.6 M4 subst. :

1613* इमं हि दुःस्वप्नमहं विचिन्तय-
न्नसमुत्सुकत्वाद्व्यथितोऽतिविह्वलः ।
न शर्म विन्दामि यथा ध्रुवं तथा
किमप्यनिष्टं नचिरादुपैष्यति ।

[ (l. 1) Ś1 D6 M4 इमां च( M4 हि ); V1 अहं हि ( for इमं हि ). Ś1 V1 D2.6 M4 दुःस्वप्नगतिं( V1 D2 °मिमं ). —(l. 2) Ñ2 B3 M4 हि ( for ऽति- ). —(l. 3) M4 तथा ( for यथा ). —Ś1 D6 तथा ध्रुवं (by transp.); B2–4 D1 [ अ ]ब्रुवं तथा; M4 [ अ ]प्यहं ध्रुवं ( for ध्रुवं तथा ). —(l. 4) Ś1 D6 [ अ ]रिष्टं ( for [ अ ]निष्टं ). V1 D1–3 M4 भवि( M4 इवे )ष्यति ( for उपै° ). ]

Colophon. —*Sarga name* : Ś1 Ñ2 B1.3.4 D1.6.7 भरतदुःस्वप्नदर्शनं( Ñ2 °कथितं; B3 °कथनं; D1.7 °दर्शनः ); V1 D3 भरतस्वप्न( D3 °* )दर्शनः; B2 दुःस्वप्नदर्शनं; D2 भरतपर्वणि भरतस्वप्नदर्शनः; D4 भरतदुःखप्रदर्शनं; D5 भरतपर्वणि दुःस्वप्नकथनः. —*Sarga no.* ( figures, words or both ) : B1 D3.6 om.; Ś1 75; Ñ2 V1 D7 M4 71; B2 Dg1 Dt1 Dd1 Dm1 T G M1–3 69; B3 D4 70; B4 65; D1 127; D2.5 74. —After colophon, D6 concludes with श्रीरामचन्द्राय नमो नमः; T2 with श्रीरामचन्द्राय नमः; G with श्रीरामाय नमः.

G. 2. 100. 54
B. 2. 91. 58
L. 2. 104. 59

तर्पिताः सर्वकामैस्ते रक्तचन्दनरूषिताः ।
अप्सरोगणसंयुक्ताः सैन्या वाचमुदैरयन् ॥ ५४
नैवायोध्यां गमिष्यामो न गमिष्याम दण्डकान् ।
कुशलं भरतस्यास्तु रामस्यास्तु तथा सुखम् ॥ ५५
इति पादातयोधाश्च हस्त्यश्वारोहबन्धकाः ।
अनाथास्तं विधिं लब्ध्वा वाचमेतामुदैरयन् ॥ ५६
संप्रहृष्टा विनेदुस्ते नरास्तत्र सहस्रशः ।
भरतस्यानुयातारः स्वर्गोऽयमिति चाब्रुवन् ॥ ५७
ततो भुक्तवतां तेषां तदन्नममृतोपमम् ।
दिव्यानुद्वीक्ष्य भक्ष्यांस्तानभवद्भक्षणे मतिः ॥ ५८
प्रेष्याश्चेट्यश्च वध्वश्च बलस्थाश्चापि सर्वशः ।
बभूवुस्ते भृशं तृप्ताः सर्वे चाहतवाससः ॥ ५९
कुञ्जराश्च खरोष्ट्राश्च गोश्वाश्च मृगपक्षिणः ।
बभूवुः सुभृतास्तत्र नान्यो ह्यन्यमकल्पयत् ॥ ६०

[ (l. 1) $B_4$ समृष्ट- (for सुमृष्ट-). —(l. 3) $B_4$ परमभासुराः. ]

54 $^{a}$) $B_{1.3}$ अर्पिताः (for तर्पिताः). $V_1$ तु; $B_{1.3.4}$ $Dg_1$ $D_2$ $T_3$ $G_1$ $M_{3.4}$ तै; $Dt_1$ $Dd_1$ $Dm_1$ च (for ते). —$^{b}$) $Ś_1$ $D_{3-7}$ दिव्य- (for रक्त-). $Ś_1$ $Ñ_1$ $D_{1.2.4-7}$ -भूषिताः (for -रूषिताः). —$^{c}$) $M_4$ -जन- (for -गण-). $Ś_1$ $D_{1-3}$ -संघुष्टाः; $Ñ$ $V_1$ B $D_{4.5.7}$ -संहृष्टाः; $D_6$ -संजुष्टाः; $M_4$ -संकीर्णाः (for -संयुक्ताः). —$^{d}$) $Ś_1$ $Ñ$ B $D_6$ सैन्या वाच; $V_1$ संज्ञावाचम्; $D_3$ सैन्या वाच्यम् (for सैन्या वाचम्). $Ś_1$ $Ñ_1$ $V_1$ $B_1$ $Dt_1$ $Dd_1$ $Dm_1$ $D_{1-5.7}$ $T_{2.3}$ G M Ck.t उदीरयन्; Cg as in text (for उदैरयन्). —After 54, $G_3$ reads 57.

55 $V_1$ $B_4$ om. $55^{ab}$. —$^{a}$) $D_1$ न च (for नैव). $D_2$ प्रविश्यामो (for गमिष्यामो). —$^{b}$) $Dm_1$ $D_{4.7}$ ना($D_4$ नो)-गमिष्याम($D_7$ °मि). $T_2$ दंडकं (for °कान्). $Ś_1$ $Ñ$ $B_{1-3}$ $D_{1.3.6}$ गमिष्यामो न दंडकं($B_1$ दारकं; $D_3$ नंदकान्); $D_2$ न गमिष्यामि दंडकान्. —$B_1$ om. $55^{c}$–$56^{b}$. —$^{d}$) $M_4$ च (for [अ]स्तु). $G_3$ रामश्चास्तु. $Ñ_2$ $B_{2.3}$ $Dg_1$ $D_{1-5.7}$ $G_1$ $M_3$ यथा-; $V_1$ $B_4$ सदा (for तथा).

56 $B_1$ om. $56^{ab}$ (cf. v.l. 55). —$^{a}$) $T_2$ पादितयोधाश्; $G_2$ $M_{1.3}$ पादातयौधाश्; Cr पादातयो योधा. $Ś_1$ $D_6$ इत्यवोचंत योधास्ते; $Ñ$ $B_{2-4}$ $D_{1-5.7}$ $M_4$ इति हस्त्य($Ñ_1$ $D_{4.7}$ पत्य)श्वं($Ñ$ $B_{2.3}$ $D_{3-5.7}$ यो)धा($D_{3.7}$ °ध्या)स्ते ($B_3$[marg. also]$._4$ $D_{1.2}$ $M_4$ °श्च); $V_1$ हस्त्यश्वरथबंधाश्च. —$^{b}$) $Ś_1$ -गंधकाः; $B_3$ -वंधकः (for -बन्धकाः). $V_1$ $B_3$ (marg. also)$._4$ $D_{1-3}$ $M_4$ पशुपालास्तथापरे; $B_2$ हस्तारोहणबंधकाः. —$^{c}$) $B_{1.4}$ अथातिथि($B_1$ °थ्य)-; $T_3$ °स्त्वं (for अनाथास्तं). $D_6$ दृष्ट्वा (for लब्ध्वा). —$^{d}$) $Ś_1$ $Ñ$ $V_1$ B $D_{1-7}$ $M_4$ पुण्यां वाचम्($Ś_1$ $Ñ$ $B_{1.2}$ $D_6$ °ण्या वाच); Cr.g as in text; Ck वाचमेनाम् (for वाचमेताम्). $B_1$ $Dt_1$ $Dd_1$ $Dm_1$ $D_{2-5.7}$ $T_{2.3}$ $G_{1.3}$ $M_3$ Cr.k उदीरयन्; $D_1$ उदीर्य च; Cg as in text (for उदैरयन्). $G_2$ वाचतो सुददैरयन् (sic).

57 $D_3$ om. 57. $G_3$ reads 57 after 54. —$^{a}$) G(ed.) अथ हृष्टाः (for संप्र°). $Ś_1$ $D_6$ प्रतिजगुर्; $Ñ_2$ $B_3$ प्रमत्ताश्च; $V_1$ $B_1$ $D_{1.2.5}$ $M_4$ विजहुस्ते($B_1$ °श्च); $D_7$ विरेजुस्ते (for विनेदुस्ते). $B_2$ संहृष्टाः प्रविजहुश्च; $B_4$ संहृष्टाः परिजग्मुश्च; $D_4$ संहृष्टाश्च विरेजुस्ते. —$^{b}$) $Ñ_1$ शत- (for तत्र). —$^{c}$) $D_{4.5.7}$ [अ]नुगंतारः (for °यातारः). —After 57, $B_3$ ins.:

2031* एवंभूतं भक्ष्यभोज्यं न लब्धं कुत्रचित्कदा ।;

while $Dg_1$ $Dt_1$ $Dd_1$ $Dm_1$ S ins.:

2032* नृत्यन्तश्च हसन्तश्च गायन्तश्चैव सैनिकाः ।
समन्तात्परिधावन्ति माल्योपेताः सहस्रशः ।

[ (l. 1) $G_2$ सइंतश् (meta.) (for हसन्तश्). $T_3$ नृत्यंति स्म हसंति स्म (for the prior half). $T_{1.2}$ $M_2$ स्म (for [ए]व). $Dg_1$ $T_3$ G $M_{1.3.4}$ गायंति($G_1$ $M_4$ °त) स्म च (for गायन्तश्चैव). —(l. 2) $Dt_1$ $Dm_1$ परिधावंतो. $G_{1.3}$ मालोपेताः (for माल्यो°). ]

58 $^{a}$) $M_3$ [उ]रु भुंजतां (for भुक्तवतां). $T_2$ शेषं (for तेषां). —$^{c}$) $G_2$ $M_1$ उदीक्ष्य (for उद्वीक्ष्य). $T_2$ $G_1$ च (for तान्). $Ś_1$ $D_6$ दिव्यानामपि भोगानाम्; $Ñ_1$ दिव्यानामथ भक्ष्यां भोग (sic); $Ñ_2$ B $D_{1-3}$ दिव्यभक्ष्यो($B_{1.3.4}$ °भक्षो; $D_1$ भक्षौ)पभोगानां($B_4$ °पन्नानां); $V_1$ दिव्यभक्तोपभोगानाम्. $D_{4.5.7}$ दिव्यानामथ भक्ष्या($D_7$ °क्षा)णाम्. —$^{d}$) $Ñ_2$ B $Dm_1$ $D_3$ $T_2$ $G_1$ नाभवद्; $D_1$ नाद्रवद्; Cg.t as in text (for अभवद्).

59 $^{a}$) $M_{3.4}$ प्रेक्ष्याश्. $T_2$ $G_{2.3}$ $M_{2-4}$ चेटाश्; $M_1$ चेष्टाश् (sic); Cg.k.t as in text (for चेट्यश्). $M_4$ बंधाश् (for वध्वश्). —$^{b}$) $T_1$ च सहस्रशः (for चापि सर्वशः). —For $59^{ab}$, $Ś_1$ $Ñ$ $V_1$ B $D_{1-7}$ subst.:

2033* प्रैष्याश्चैवाश्वबन्धाश्च बलस्थाश्चैव सर्वशः ।

[ $Ś_1$ $D_6$ ब्रह्मचारिगृहस्थाश्च; $Ñ_1$ प्रेष्याश्चैवाश्वबंधाश्च; $V_1$ प्रेष्याश्चेट्यश्च शूद्राश्च; $B_1$ प्रेष्याश्चै(श्च)बांधवाश्चापि; $B_{2.4}$ प्रेष्या($B_4$ प्रेषा)श्चैवानुबंधाश्च; $D_1$ प्रेष्याश्चेटाश्वबंधाश्च; $D_2$ प्रेक्ष्या चेष्टाश्च बंधाश्च (sic); $D_3$ प्रौष्याश्चैवाश्वबंध्यश्च; $D_{4.7}$ प्रेष्याश्चोरा($D_7$ °क्षारा)श्च वृद्धाश्च; $D_5$ प्रेष्यन्श्चैवश्च सर्वाश्च (sic) (for the prior half). $Ś_1$ $D_6$ वानप्रस्थाश्च; $Ñ_1$ $D_{4.7}$ बलस्थाश्चापि; $Ñ_2$ वनस्थाश्चैव; $V_1$ $D_{1-3}$ बलाध्यक्षाश्च; $D_3$ बलस्था येपि (for बलस्थाश्चैव). ]

—$^{c}$) $Ś_1$ $Ñ$ $V_1$ B $D_{1-7}$ सु($D_3$ स; $D_{4.7}$ च)भृशं (for ते भृशं). $V_1$ $T_1$ हृष्टाः; $Dt_1$ प्रीताः; $M_3$ तप्ताः (for तृप्ताः). —$^{d}$) $B_1$ निसृत-; $D_2$ ते हत-; $D_{4.7}$ चाप्यति-; $D_5$ चापेत- (for चाहत-).

60 $^{b}$) $Ś_1$ $D_5$ गोवाजि-; $Ñ$ $V_1$ B $D_{1-4.7}$ $M_4$ गो($D_3$ ग)जाश्वि-; $G_{1.3}$ तथान्ये (for गोश्वाश्च). $D_2$ -भृतपक्षिणां (sic). —$^{c}$) $Ś_1$ $V_1$ $B_{1.2.4}$ $D_6$ सुभृशं; $Ñ_2$ $B_3$ संवृतास्; $D_5$ संभृतास्; Cm.g.k as in text (for सुभृतास्). $B_{1.2.4}$ तृप्ता;

नाशुक्लवासास्तत्रासीत्क्षुधितो मलिनोऽपि वा ।
रजसा ध्वस्तकेशो वा नरः कश्चिददृश्यत ॥ ६१
आजैश्चापि च वाराहैर्निष्ठानवरसंचयैः ।
फलनिर्यूहसंसिद्धैः सूपैर्गन्धरसान्वितैः ॥ ६२
पुष्पध्वजवतीः पूर्णाः शुक्लस्यान्नस्य चाभितः ।
ददृशुर्विस्मितास्तत्र नरा लौहीः सहस्रशः ॥ ६३

बभूवुर्वनपार्श्वेषु कूपाः पायसकर्दमाः ।
ताश्च कामदुघा गावो द्रुमाश्चासन्मधुश्च्युतः ॥ ६४
वाप्यो मैरेयपूर्णाश्च मृष्टमांसचयैर्वृताः ।
प्रतप्तपिठरैश्चापि मार्गमायूरकौक्कुटैः ॥ ६५
पात्रीणां च सहस्राणि शातकुम्भमयानि च ।
स्थाल्यः कुम्भ्यः करम्भ्यश्च दधिपूर्णाः सुसंस्कृताः ।
यौवनस्थस्य गौरस्य कपित्थस्य सुगन्धिनः ॥ ६६

G. 2. 100. 66
B. 2. 91. 72
L. 2. 104. 71

---

D3 तेपि ( for तत्र ). —$^{d}$ ) Dg1 नातो; Cm.g as in text ( for नान्यो ). Dd1 प्रकल्पयत् ( for अक° ). Ś1 Ñ B D4–7 नानाविधगतिस्वराः( Ñ B3 °नाः ); V1 नराः शतसहस्रशः; D1–3 नानाभक्ष्यान्नभोजनैः; M3 नान्योन्यमपकल्पयत्.

61 $^{a}$ ) D3–5.7 नाशुद्ध- ( for नाशुक्ल- ). V1 कुचेषः कोपि ( also को न ) तत्रासीन्; B2 नाक्लृप्तवासाश्चासीत्तु; B4 नाशुक्लवाससस्तत्र. —$^{b}$ ) V1 D1.2 मलिनः क्षुधि( V1 °भि )तोपि वा. —$^{c}$ ) D1 धूतकेशो ( for ध्वस्त° ). —$^{d}$ ) Ś1 D6 अथाभवत्; Ñ1 अथा तदा ( sic ); Ñ2 V1 B1–3 D5 अभूत्तदा; B4 अथो तथा; D1–3 अथो तदा; D4.7 अथोभवत्; M4 अहो तदा ( for अदृश्यत ). —After 61, B3.4 ins. :

2034* शयनानि च सर्वाणि पराध्यास्तिरणानि च ।
आसनानि च दिव्यानि भेजिरे ते ततस्ततः ।

62 Ś1 Ñ V1 B D1–7 M4 read 62 after 65. —$^{a}$ ) Ś1 D6 अथ; Ñ V1 B D1–5.7 अपि ( for चापि ). B1 *वराहैर्; Dg1 G1.2 M1.4 वराहैश्च; Cg as in text ( for च वाराहैर् ). —$^{b}$ ) Ś1 Ñ2 B1.3 D1.6.7 मिष्टान्न-; V1 दृष्टान्न-; B2.4 D1–3.5 मृष्टान्न-; G3 निष्टान्न-; M4 निष्णात-; Cv.r.m.g.t as in text ( for निष्ठान- ). Ñ2 B2–4 -रस-; V1 -धन- ( for -वर- ). M4 -संस्कृतैः ( for -संचयैः ). D5 मृष्यमांसस्य संचयैः. —$^{c}$ ) Ñ1 बलैर्; G3 फलैर्; M4 बल- ( for फल- ). Ś1 D6 फलैर्निर्व्यूढ( D6 °ह )संबद्धैः; V1 D1.3 फलनिर्व्यूहसंबंधैर्; D2.4.7 फलैर्निर्व्यूहसंबंधैः; Cm फलनिर्यूहसंस्थितैः. —$^{d}$ ) Ñ2 B2.3 पूपैरपि; V1 Dm1 धूपैर्गंध-; B1.4 पू( B4 सू )रैरपि; D1 सूयैर्गंध- ( sic ); M4 धूपगंध- ( for सूपैर्गन्ध- ). Ś1 Ñ1 D6 सूपैः सू( D6 पू )पैश्च संस्कृतैः( Ñ1 °तः ); D4.7 सूपैर्यूपै( D4 °** )श्च संस्कृतैः; D5 सूयैर्यूपैः सुसंस्कृतैः ( sic ).

63 B1 reads $63^{ab}$ twice. —$^{a}$ ) V1 D4.7 वाप्यो; D1.2.5 बाष्प- ( for पुष्प- ). D3 -गंधवती. Ñ2 B1 ( first time ).2.3 बाष्पायमानाः संपूर्णाः; B1 ( second time ) पुष्पध्वजावकीर्णानि. —$^{b}$ ) G( ed. ) शुक्लान्यन्नस्य. Ñ1 D4.5.7 तिष्ठति; Ñ2 B ( B1 first time ) तिष्ठतः; B1 second time बिभ्रति; M4 राशिनः ( for चाभितः ). V1 D1–3 शुक्लान्न( V1 °क्लांध )स्य समंततः. —$^{c}$ ) Ñ2 B D4.5.7 M4 सर्वे ( for तत्र ). —$^{d}$ ) V1 D1–5.7 लेह्यं; B1 स्थालीः; B2 G1 नार्यः; T2 ते हि; M4 लोहीः ( for लौहीः ). —For 63, Ś1 D6 subst. :

2035* दृश्यन्ते चान्नपूर्णानि सुशुभानि च तत्र वै ।

64 $^{a}$ ) G3 ददृशुर् ( for बभूवुर् ). V1 वलपार्श्वेषु; B1 °वासेषु; B3 °वासे तु; T1 °पार्श्वे तु ( for वनपार्श्वेषु ). —$^{b}$ ) Ś1 Ñ V1 B D1–7 M4 ह्रदाः ( for कूपाः ). —$^{c}$ ) Ñ1 D2–5.7 सर्व- ( for ताश्च ). Ś1 Ñ V1 B1–3 D6 कामवहा नद्यो; M4 °हो गावो ( for कामदुघा गावो ). —$^{d}$ ) Ś1 D6 M4 [ ए ]व; V1 D1.2 [ अ ]पि ( for [ आ ]सन् ). Ś1 D6.7 Cm मधुश्च्युताः; Ñ2 B1.3 D3–5 T2.3 G2.3 M1.2 °च्युताः( Ñ2 B1 D3.5 °तः ); V1 D1.2 G1 °स्रवाः; Dt1 °श्रुताः; Cg$p$ मधुस्रुतः ( for मधुश्च्युतः ).

65 $^{a}$ ) D4.5.7 -पानाश्च; M4 -संपूर्णा ( for -पूर्णाश्च ). —$^{b}$ ) Ś1 V1 D4.6.7 मिष्ट-; Ñ2 B3.4 D1.3 भृष्ट- ( for मृष्ट- ). M4 -मांसोच्चयैर्. D1 भृताः ( for वृताः ). —$^{c}$ ) Ś1 Ñ1 प्रतप्त( Ñ1 °प्तैः )पिठरैश्चैव; Ñ2 V1 B D2.3 प्र( B2 आ )तप्तैः पै( V1 D3 पी )ठरैश्चैव; Dg1 प्रतप्तपिठकैश्चापि; Dt1 Ck.t प्रतप्तपैठरैश्चापि; Dd1 प्रतप्तपैवरैश्चापि; D1 प्रतप्तौर्ध्वैवरैश्चैव; D5.6 प्रतप्तपिठ( D5 °छ )राश्चैव; G3 प्रतप्तपीठ°; M4 प्रतप्तैरितरै°; Cv.m.g प्रतप्तपिठरै° ( as in text ). —$^{d}$ ) B4 मांसैर् ( for मार्ग- ). Ś1 Ñ V1 B D1–3.6 M4 -त्तै( V1 B1 D1.2 -ति )त्ति( D1 त्त )रैः; Dm1 T3 G1.3 M3 -कुक्कुटैः; D4.5.7 -जांगलैः( D5 °लाः ); Cv.r.m.g as in text ( for -कौक्कुटैः ). —After 65, Ś1 Ñ V1 B D1–7 M4 read 62.

66 V1 om. $66^{a}$–$67^{b}$. —$^{a}$ ) Ñ2 B2 D2.6 G3 पात्राणां; Cr.m.g.k.t as in text ( for पात्रीणां ). M4 तु ( for च ). —After $66^{a}$, B3.4 D ( except D6 ) S ins. :

2036*             स्थालीनां नियुतानि च ।
न्यर्बुदानि च पात्राणि.

[ ( l. 1 ) B3.4 D1–5.7 M4 अयु( D7 °प्यु )तानि. —( l. 2 ) D4.7 अर्बुदानि. B3.4 D1–3.5 M4 अर्बुदानि च पात्राणां( M4 °त्रीणां ).] —$^{b}$ ) Ś1 Ñ B D6 शातकुं( Ś1 Ñ1 D6 °कौं )भान्यनेकशः; D1.2 M4 शातकौं( D1 °कुं )भानि सर्वशः; D3–5.7 शातकौंभमयानि च. —$^{c}$ ) D7 स्थाल्याः ( sic ). Ś1 Ñ B D1–3.5–7 कुंभाः ( for कुम्भ्यः ). Ś1 B1.2.4 D1–3.6 कलस्य( D1.2 °सा )श्च; Ñ1 करोद्यश्च; Ñ2 B3 च कलसा; D4 च कुंडाश्च; D5 मयाद्यश्च; D7 च कुशश्च ( sic ); M4 करक्यश्च ( for करम्भ्यश्च ). —$^{d}$ ) Ñ2 B2–4 D1.2 दध्नः पूर्णाः; D7 °वर्णाः; G( ed. ) मधु° ( for दधि° ). Ñ2 B3 स्वलंकृताः; D1.2 T3 सहस्रशः; D3 सुरस्तता

G. 2. 100. 67
B. 2. 91. 73
L. 2. 104. 72

ह्रदाः पूर्णा रसालस्य दध्नः श्वेतस्य चापरे ।
बभूवुः पायसस्यान्ये शर्करायाश्च संचयाः ॥ ६७
कल्कांश्चूर्णकषायांश्च स्नानानि विविधानि च ।
ददृशुर्भाजनस्थानि तीर्थेषु सरितां नराः ॥ ६८
शुक्लानंशुमतश्चापि दन्तधावनसंचयान् ।
शुक्लांश्चन्दनकल्कांश्च समुद्गेष्ववतिष्ठतः ॥ ६९

दर्पणान्परिमृष्टांश्च वाससां चापि संचयान् ।
पादुकोपानहां चैव युग्मान्यत्र सहस्रशः ॥ ७०
आञ्जनीः कङ्कतान्कूर्चांश्छत्राणि च धनूंषि च ।
मर्मत्राणानि चित्राणि शयनान्यासनानि च ॥ ७१
प्रतिपानह्रदान्पूर्णान्खरोष्ट्रगजवाजिनाम् ।
अवगाह्य सुतीर्थांश्च ह्रदान्सोत्पलपुष्करान् ॥ ७२

(sic); D4.7 सुसंभृताः; M4 सुसत्कृताः (for सुसंस्कृताः). Ś1 D6 दध्नः पूर्णाश्च संस्कृताः. —$^{e}$) Ś1 D3–7 गोरसस्य च (for यौवनस्थस्य). Ś1 Ñ B D6 त(B2 चु)क्रस्य; D1.2 M4 सांद्रस्य; D3–5.7 सारस्य (for गौरस्य). —$^{f}$) D4.7 दधिदुग्ध- (for कपित्थस्य). Ś1 Ñ2 B D1–3.6 M4 दधि(Ś1 D1.2.6 M4 कपि)-त्थसमगंधिनः; D5 कपित्थरसगंधिनः.

67 V1 om. $67^{ab}$ (cf. v.l. 66). —$^{a}$) Ñ2 तदा (for ह्रदाः). Ś1 D6 [अ]न्नशालाश्च; Ñ B D1–5.7 M4 रसालाया (B1.2.4 °श्च); T3 रसालश्च (for रसालस्य). —D6 reads $67^{b}$–$68^{a}$ in marg. —$^{b}$) Dg1 चैतस्य (for श्वेतस्य). —$^{c}$) D4.5.7 [अ]थ; M4 [अ]पि (for [अ]न्ये). Ś1 Ñ2 V1 B D1–3.6 प(B4 पा)यसश्चापि; Ñ1 पयसा चाथ; Dg1 T1 M3 पायसाश्चान्ये; Dt1 Dd1 Dm1 T2 पयस(Dd1 °सा)श्चान्ये; T3 पयसान्यान्ये; Cg.k as in text (for पायसस्यान्ये). —$^{d}$) B1 संनिभाः (for संचयाः). Dg1 T2 G M1.2 Cv.m.g शर्करायाव (M1 °पूप)संचयः(G2 M1 °यान्; Cv.m.g °याः); Dt1 T1 Cr.k.t शर्कराणां च संचयाः; M3 शर्कराश्चैव संचयाः.

68 D6 reads $68^{a}$ in marg. (cf. v.l. 67). —$^{a}$) B3 कंकां पूर्ण-; B4 गंधांश्चूर्ण- (for कल्कांश्चूर्ण-). Ś1 Ñ2 Dm1 D6 G1.3 M4 कल्काश्चू(Ś1 D6 G1.3 °ल्कचू)र्णकषायाश्च; V1 भक्ष्यान्लेह्यान्चोष्यांश्च (subm.); D1–3 श्लक्ष्णाश्चूर्णाः कषायाश्च; D4.5.7 कल्काश्चूर्णाः कषायाश्च. —$^{b}$) Ś1 D4–7 वासांसि; V1 स्थानानि; D3 मासाना (sic) (for स्नानानि). —$^{c}$) Ñ1 भाजनस्थाश्च; V1 भाजनस्थानान्. Ś1 D6 ददुर्भोज्यरसांश्चापि. —$^{d}$) Ñ2 B2 तीरेषु; B4 lacuna (for तीर्थेषु). D1.2 सरितो; Ct as in text (for सरितां). Ś1 B4 Dm1 वराः; D4.5.7 तथा (for नराः). M3 तीर्थानं ददृशुर्नराः.

69 G2 M1 om. (hapl.) $69^{ab}$. —$^{a}$) Ś1 Ñ2 B3 D6 श्लक्ष्णान् (for शुक्लान्). Ś1 B2 D6 चैव (for चापि). Ñ1 शुक्लानंगमतश्चापि; V1 शुष्कान्सुमनसश्चापि (hypm.); B4 शुक्लानांशुमतश्चैव; D1.3 शुक्लान्नं(D3 °न्न) सुमनश्चापि; D2 सुसानां सुमनश्चापि; D4.5.7 शुक्लान्नं सुमनः पुष्पं. —$^{b}$) D1 -संचयं; D2 °याः (for -संचयान्). —$^{c}$) Ś1 Ñ2 B3 D2.4–7 श्लक्ष्ण(D2 °क्ष्णं)-; V1 शुष्क-; B1.2.4 D3 शुक्ल-; Dg1 शुक्लंश्; D1 M4 श्लक्ष्णांश् (for शुक्लांश्). Ś1 -कल्पाश्; V1 D2 -कल्कं; D1.3 -कल्कश्; D6 -कल्काश् (for -कल्कांश्). —$^{d}$) V1 स स्वर्गेषु; B4 संयुक्तेषु; Dt1 D2.3.5 ससुद्गेषु; D1 समूहेषु (for समुद्गेषु). Ś1 Ñ2 B1.2.4 D6 च तिष्ठतः; Dm1 T3 [ए]व तिष्ठतः; D3.7 [अ]वतिष्ठति; D4 [इ]व तिष्ठति (for [अ]व-तिष्ठतः).

70 $^{a}$) D4 परिदृष्टांश्च (for °मृष्टांश्च). Ś1 Ñ2 V1 B D1–3.5.6 दर्पणाः परिमृ(D2 °मि)ष्टाश्च; T3 दर्पणे परिमृष्टा-स्यान्. —$^{b}$) Ś1 Ñ V1 B D1–7 माल्यानि विविधानि च. —Ś1 D3.7 om. $70^{c}$–$71^{b}$. G3 illeg. from $70^{c}$ up to first म in $71^{c}$. —$^{c}$) Ñ1 B4 Dg1 Dd1 Dm1 D4.6 T2 G2 M1 Cr.m.g- [उ]पानहश्; V1 -[उ]पनहाश्; B2.3 Dt1 T1.3 Ct -[उ]पानहं; D1 -[उ]पानहौ; Ck -[उ]पानहान् (for -[उ]पानहां). Dd1 Dm1 T3 G1.2 M1 [अ]पि (for [ए]व). B1 पादुकोपानहस्यैव. —$^{d}$) Ñ2 B3.4 युगानि; B2 पूगान्; Dg1 युग्मान्; D4 युग्यानि; Ck as in text (for युग्मानि). B1 स्वर्गान्यत्र सहस्रशः.

71 Ś1 D3.7 om. $71^{ab}$; G3 illeg. up to first म in $^{c}$ (for all cf. v.l. 70). —$^{a}$) Ñ1 अंजन्यः कंकताः कूर्चांश्; Ñ2 B1 अंजलीः(B1 °न्यः) कंकतीः कूर्चा; V1 अंगुल्यः कंकतीः कूर्चाश्; B2 अंजनीः कंकती हूर्चाश्; B3.4 आंजनी(B4 अंजनां) कंकतीः कूर्चाच्; D1 अंजन्यैः कंकता कूर्चांश्; D2.6 अंजन्यः कंकताः कूर्चाः; D4 आंजन्यः कंकताः कूर्चा; D5 कुलाग्राः कंकता कुंचाः; T2 G2 M1.3 आं(G2 M1 अं)जनीः कंकता(M3 °रा)न्कूर्चाञ्; G1 आंजनः कंकतान्कूर्चांश्; M4 आंजनीकृत-कान्कूर्चाञ्. —$^{b}$) Ñ2 शूद्राणि (sic); V1 चित्राणि; Dg1 D4–6 T1 Cg शस्त्राणि; G1 चित्रांपि (sic) (for छत्राणि). Ñ2 V1 B D1.2.4–6 M4 विविधानि च (for च धनूंषि च). —$^{c}$) D1.2 M4 वर्मत्राणानि; T1 °णि च; T3 तनु°; Cr मर्मत्राणादि; Cm.g as in text (for मर्मत्राणानि). M4 दिव्यानि (for चित्राणि). Ś1 Ñ B D6 G1 तनुत्राणि विचित्राणि; D3–5.7 धनूंषि गात्रत्राणानि (D4.7 °त्रावरणं); G2 M3 मर्मत्राणि विचित्राणि. —$^{d}$) B4 शयनाभ्यासनानि च. —After 71, B3.4 ins.:

2037* राशयस्तत्र दृश्यन्ते ताम्बूलस्य सुगन्धिनः ।

72 $^{a}$) V1 प्रतिपूर्ण-; B3 °पानैर् (for °पान-). Ś1 Ñ V1 B1.3.4 D1–4.6.7 -ह्रदाः पूर्णाः (for -ह्रदान्पूर्णान्). D5 प्रतिमाः ह्रदाः संपूर्णाः (sic). —$^{b}$) B4 lacuna for गज. G3 गजोष्ट्रखरवाजिनां. —$^{c}$) Ś1 V1 B1.4 D1–3.5.6 T1 अवगाह्याः(D5 °ह्राः); Ñ2 B2.3 अवगाह्यान् (for °गाह्य). Ñ2 स्वतीर्थांश्; V1 B1 Dt1 Dm1 D1–3.5.7 सुतीर्थाश्; Cr.m.g as in text; Ck सुतीर्थानि (for सुतीर्थांश्). —$^{d}$) D4.7 G1 (after corr. as in text) -पुष्पकान्; M3 -पुष्कलान्

नीलवैदूर्यवर्णांश्च मृदून्यवससंचयान् ।
निर्वापार्थं पशूनां ते ददृशुस्तत्र सर्वशः ॥ ७३
व्यस्मयन्त मनुष्यास्ते स्वप्नकल्पं तदद्भुतम् ।
दृष्ट्वातिथ्यं कृतं तादृग्भरतस्य महर्षिणा ॥ ७४
इत्येवं रममाणानां देवानामिव नन्दने ।
भरद्वाजाश्रमे रम्ये सा रात्रिर्व्यत्यवर्तत ॥ ७५
प्रतिजग्मुश्च ता नद्यो गन्धर्वाश्च यथागतम् ।
भरद्वाजमनुज्ञाप्य ताश्च सर्वा वराङ्गनाः ॥ ७६
तथैव मत्ता मदिरोत्कटा नरा-
स्तथैव दिव्यागुरुचन्दनोक्षिताः ।
तथैव दिव्या विविधाः स्रगुत्तमाः
पृथक्प्रकीर्णा मनुजैः प्रमर्दिताः ॥ ७७

इति श्रीरामायणे अयोध्याकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

G. 2. 100. 77
B. 2. 91. 83
L. 2. 104. 82

( for °रान् ). Ś1 Ñ1 B1.4 D1-3.5.6 हृदाः सोत्पल( D2 °त्फुल्ल )-पुष्कराः( D5 °त्पङ्काः ). —After 72, V1 B3.4 Dg1 Dt1 Dd1 Dm1 D1-3 S ins. :

2038* आकाशवर्णप्रतिमान्स्वच्छतोयान्सुखप्लवान् ।

[ V1 B3.4 Dg1 Dd1 -वर्णा( V1 B4 D1 °र्ण )प्रतिमाः( Dg1 °मान् ); D2 -प्रतिमावर्णा; M4 -वर्णप्रतिम-; Cg.k as above ( for -वर्णप्रतिमान् ). Dg1 अच्छतोयान् ( for स्वच्छ° ). Dt1 Dd1 Dm1 T3 Ct सुखाप्लु( Dm1 °प्ल )वान्; G1.3 °प्रदान् ( for सुखप्लवान् ). B3.4 सुतोयाः सुखविप्लवाः; V1 D1-3 स्वच्छ( D1 स्वादु; D2 स्वस्थ )-तोयाः सुखप्लवाः ( for the post. half ). ]

73 [a]) Ś1 Dg1 D6.7 G M -वैडूर्य-. D4 -पद्मांश्च ( for -वर्णांश्च ). —[b]) Ś1 D6 मृष्टान्नावाससंचयान्; V1 मृदून्वर*-संचयान्; D4.7 मृष्टान्यावाससंचयान्. —Dg1 om. 73[cd]. —[c]) Ś1 D1.4.6.7 निवासार्थं; Ñ1 तीरयंतः; Ñ2 B1.3.4 चारयंतः; V1 निर्विपंतः; B2 निर्धधतः; D2 निवपंतं; D3 विश्रामार्थं; D5 ग्रासार्थं ते; T1.2 G1 M2 Cr.m.g निर्वापार्थान्; M4 निवापार्थं; Ck.t as in text ( for निर्वापार्थं ). Ś1 D1.4-7 च ( for ते ). —[d]) Ś1 D1.4-7 तत्र ह ( for सर्वशः ). Ñ V1 B D2.3 नांतं ( B2 पदं ) ददृशिरे तदा( V1 D3 जनाः; D2 नराः ). —After 73, M4 ins. :

2039* चित्रशालासु दिव्यासु गायतोऽप्सरसां गणान् ।
नृत्यन्तीश्च लपन्तीश्च चतुःशालेषु ता स्त्रियः ।
पुष्पसंस्तरसंस्तीर्णे गीतवादित्रनादिते ।
पुंस्कोकिलशताकीर्णे मयूरस्वरनादिते ।

74 [a]) V1 D1.2 G1 विस्मयंत( V1 °ते ). M4 वने ते तु ( for मनुष्यास्ते ). —[c]) B3 तत्र; Dt1 T3 G2 तावद् ( for तादृग् ). —[d]) Ñ2 B1-3 M4 महात्मनः ( for महर्षिणा ). Dt1 भरद्वाजमहर्षिणा. —After 74, Ñ V1 B D1-3 M4 ins. :

2040* न शेकुर्विस्मिताः स्वप्तुमिन्द्रियैस्ते महाबलाः ।
रजन्यां तु निवृत्तायामपिबंस्ते महाकुलाः ।

[ (l. 1) M4 हर्षिता ( for न शेकुर् ). Ñ2 V1 B1 D2 स्वप्नम्; M4 सुप्ता ( for स्वप्तुम् ). B3 च; M4 तु ( for ते ). V1 D2 बलाहताः; D1.3 M4 बलात्क्र( D3 ° )ताः ( for महाबलाः ). —D1 om. l. 2. —(l. 2) D2 च ( for तु ). Ñ2 B1.3 व्यतीतायाम्; V1 D2.3 प्रभातायाम्; M4 प्रवृत्तायां ( for निवृत्तायाम् ). Ñ2 B1.3.4 ते मद्या( B4 °मा )कुलाः; V1 तदनाकुलाः ( for ते महाकुलाः ). D2.3 नापिबंस्तमनाकुलाः; M4 नाविबन्मदलालसाः ( for the post. half ).]

75 [a]) Ś1 Dm1 D3 G1 [ ए ]व; G2.3 M1.2 [ ए ]पां ( for [ ए ]वं ). Ñ1 (also) भाषमाणास्ते ( for रममाणानां ). —[c]) V1 D1-3 M4 पुण्ये; D5 [ ऽ ]रण्ये ( for रम्ये ). —[d]) Ñ1 निशा ( for रात्रिर् ). Ś1 व्यतिवर्तत; D1 व्यप°; D2 विनि°; D3 व्यत्यवर्तय; D5 व्यनिवर्तत; G1 संन्यवर्तत; M4 अभिवर्तत ( for व्यत्यवर्तत ).

76 D5 om. 76. —[a]) Ś1 D4.6.7 ता नार्यो; Dt1 Ct ताः सर्वाः; D3 नद्यो वै ( for ता नद्यो ). —[c]) D4.7 T3 G1 अनुप्राप्य; Cr.m.g.t अनुज्ञाप्य ( as in text ). —[d]) Ñ2 तु ( for च ). D3 ताश्चैवाप्सरसस्तथा.

77 D2 om. ( hapl. ) 77[ab]. —[a]) D3.5 मदिरा मदो ( D5 °हो )त्कटास् ( for मदिरोत्कटा नरास् ). —D1 transp. 77[b] and 77[c]. —[b]) Ñ2 reads from गुरु up to दिव्या in [c] in marg. Dt1 Dd1 Dm1 D1.4 S -[ अ ]गरु-; D5 -[ अं ]-बर- ( for -[ अ ]गुरु- ). V1 तथैव दिव्या विविधोत्तमाश्रमाः. —[c]) Ś1 Ñ B D1-3.6 विविधोत्तम( B4 °माः )स्रजः; T3 M4 विविधस्र° ( for विविधाः स्रगुत्तमाः ). —[d]) Ñ1 Dt1 T2 विकीर्णा; Cg.k.t as in text ( for प्र° ). M4 मनुजाः ( for मनुजैः ). T1 समर्दिताः; M4 प्रचोदिताः; L( ed. ) प्रमादिताः; Cg.k.t as in text ( for प्रमर्दिताः ). —For 77[cd], V1 subst. :

2041* पृथक्प्रकीर्णा मनुजैः प्रमर्दिताः
समाश्च सर्वा विविधाश्च ताः स्त्रियः ।
[ l. 1 = 77[d]. ]

Colophon. —*Sarga name* : Ś1 Ñ V1 B D1.6 भरद्वाजातिथ्यं; D2.5.7 भरतपर्वणि भरतातिथ्यः( D5 °थ्यं ); D3.4 भरतातिथ्यं. —*Sarga no.* ( figures, words or both ): Ś1 Ñ1 B1 D3.6 om.; Ñ2 D5 100; V1 D4 96; B2 87; B3 D2 99; B4 94; Dg1 Dt1 Dd1 Dm1 T G M1-3 91; D1 152; D7 M4 98. —After colophon, G concludes with श्रीरामाय नमः.

## ८६

G. 2. 101. 1
B. 2. 92. 1
L. 2. 105. 1

ततस्तां रजनीमुष्य भरतः सपरिच्छदः ।
कृतातिथ्यो भरद्वाजं कामादभिजगाम ह ॥ १
तमृषिः पुरुषव्याघ्रं प्रेक्ष्य प्राञ्जलिमागतम् ।
हुताग्निहोत्रो भरतं भरद्वाजोऽभ्यभाषत ॥ २
कच्चिदत्र सुखा रात्रिस्तवास्मद्विषये गता ।
समग्रस्ते जनः कच्चिदातिथ्ये शंस मेऽनघ ॥ ३
तमुवाचाञ्जलिं कृत्वा भरतोऽभिप्रणम्य च ।
आश्रमादभिनिष्क्रान्तमृषिमुत्तमतेजसम् ॥ ४
सुखोषितोऽस्मि भगवन्समग्रबलवाहनः ।
तर्पितः सर्वकामैश्च सामात्यो बलवत्त्वया ॥ ५
अपेतक्लमसंतापाः सुभक्ष्याः सुप्रतिश्रयाः ।
अपि प्रेष्यानुपादाय सर्वे स्म सुसुखोषिताः ॥ ६
आमन्त्रयेऽहं भगवन्कामं त्वामृषिसत्तम ।
समीपं प्रस्थितं भ्रातुर्मैत्रेणेक्षस्व चक्षुषा ॥ ७

## 86

Dm1 begins with ॐ; M1 with श्रीरामचन्द्राय नमः; M2 with श्रीरामाय नमः.

1 $^{a}$) V1 Dg1 Dt1 Dd1 Dm1 D1.3 T1.3 M3.4 Cg.t व्युष्य; D4.7 व्युष्टां; Ck as in text ( for उष्य ). D2 राजनिर्सृष्टां. Ś1 Ñ B D6 रजनीं तामुषित्वाथ.—$^{b}$) D2 समीयान्सदः (sic); G1 संपरिच्छदः.—$^{c}$) Ñ2 B Dd1 Dm1 D4.6 Cv कृतातिथ्यं ( for °तिथ्यो ).—$^{d}$) G2 M1 च ( for ह ). Ś1 D4.6.7 कल्येभ्येत्याभ्य( Ś1 °भि )वादयत् ; Ñ B D2.3 का ( Ñ1 क )लेभ्येत्याभ्य( Ñ1 °भ्येत्याभि; Ñ2 °भ्येत्यास्व; B3 [also].4 °तं चाभ्य; D3 °प्रत्यभ्य )वादयत् ; D5 कल्य एत्याभ्यवादयत् .

2 V1 om. 2$^{ab}$.—$^{a}$) D2–5.7 स ( for तम् ).—$^{b}$) D1 आस्थितं ( for आगतम् ). Ś1 Ñ B D6 सं( D6 om. [subm.])-प्रेक्ष्य प्रांजलि( Ś1 Ñ2 B2 D6 °लिं )स्थितं; D2.4.5.7 प्रेक्ष्य( D2 °क्ष ) तं प्रांजलि( D4 °लिं )स्थितं; D3 ते प्रेक्ष्य प्रांजलिं स्थितं; T1 प्रांजलिं प्रेक्ष्य चागतं; M4 दृष्ट्वा वै प्रांजलिः स्थितं.—$^{c}$) Ś1 D7 हुत्वा; D5 कृत- ( for हुत- ). Ś1 V1 -[ अ ]ग्निहोत्रं; M3 -[ अ ]ग्निहोत्रे. M4 भगवान् ( for भरतं ).—$^{d}$) D3 भारद्वाजो.

3 $^{b}$) T3 [ अ ]स्मिन् ( for [ अ ]स्मद् ).—For 3$^{ab}$, Ś1 Ñ V1 B D1.6 M4 subst. :

2042* कच्चित्पुत्र सुखेनेयं तवाद्य रजनी गता ।

[ B4 [ ए ]व ( for [ अ ]द्य ). ];

while D2–5.7 subst. :

2043* कच्चिदद्य सुखा रात्रिरिहाश्रमपदे तव ।

[ D2 कच्चिद् ( for कच्चिद् ). ]

—$^{c}$) V1 D1 समस्तस् ; D2–5.7 सुखी च ( for समग्रस् ). D7 नरः ( for जनः ). Ñ1 D1.5–7 T2 M1 कश्चिद्-; Cg कच्चिद् (as in text ). Ś1 D6 समग्रभोजनं कच्चिद्.—$^{d}$) Ś1 D6 G1 आतिथ्यं; M4 अर्चितः; Cm.g.t as in text ( for आतिथ्ये ). V1 B4 D1 आतिथ्येन सुपूजितः; D2–5.7 तन्मे ब्रूहि नरर्षभ.

4 $^{a}$) B4 बद्ध्वा; D5 कृत्य ( for कृत्वा ).—$^{b}$) V1 B2.4 विप्रणम्य; D2–5.7 [ ऽ ]थ प्रणम्य ( for ऽभिप्रणम्य ).—$^{c}$) Ś1 Ñ1 D6 अनतिक्रांतम् ; Ñ2 अप्यनिष्क्रांतम् ; Dg1 Dt1 T2.3 M2.3 Ck उपनिष्क्रांतम् ; D1 अधिनिष्क्रांतम् . V1 आश्रमत्वाद्विनिष्क्रांतम् .—$^{d}$) M4 ज्वलित- ( for उत्तम- ).—For 4$^{cd}$, D2.4.5.7 subst.; while D3 ins. after 4 :

2044* परमं दृष्टवन्तः स्म स्वर्गलोकमिहापरम् ।

[ D5 इव ( for इह ). D3.4.7 [ आ ]गतं ( for [ अ ]परम् ). ]

5 $^{a}$) D5 संतोषितो ( for सुखो° ). B2 गहने ( for भगवन् ).—$^{b}$) Ś1 Ñ V1 B D3.6 समंत्रि-; D1 समं च; D2.4.5.7 सभृत्य- ( for समग्र- ).—$^{c}$) B1 अर्पितः; D6 तर्पिताः. Dt1 Dd1 Dm1 Cv.r.m.g.t बलवत्तर्पितश्चाहं.—$^{d}$) G2 सामात्य-. Dd1 Dm1 T2 भगवंस् ( for बलवत् ). Ś1 Ñ B D6 भगवन्सर्वश( Ñ1 °विविध; Ñ2 B1.3 °बहुश )स्त्वया; V1 सगणः सर्वशस्त्वया; Dt1 Ct बलवान्भगवंस्त्वया; D1 सबलः सर्वशस्त्वया; D2.4.5.7 विविधैः सर्वश( D2.5 °त )स्त्वया; T3 M4 सामात्यस( M4 भगवन्स )बलस्त्वया.

6 $^{a}$) Ś1 D6 M2 -क्लेशसंतापाः; B1 -क्लमसंता*; B4 -श्रम°; D1.2 -क्लमसंत्रासा; D4.7 -क्लमसंवासः; D5 -क्लमसंत्रस्ताः; T3 -क्लमसंपाताः (sic); Cg.k.t as in text ( for -क्लमसंतापाः ). V1 व्यपेतक्षमसंतापाः.—$^{b}$) Ś1 Ñ1 B1 Dt1 Dd1 Dm1 D1.2.6 T3 M4 Cg.k.t सुभिक्षाः; Ñ2 स्वभक्ष्याः; V1 सुयुक्ताः; B4 om.; Dg1 D4.5.7 G1.2 M1–3 सुभक्षाः; D3 सुभक्ताः ( for सुभक्ष्याः ). Ś1 B1.2.3( marg.; orig. सुपरिच्छदाः ).4 D6 सुप्रतिष्ठिताः; Ñ2 स्वपरिच्छदाः; V1 सुपरिश्रवाः; D1 सप्रतिश्रया ( for सुप्रतिश्रयाः ).—$^{c}$) V1 अपि प्रेक्ष्यान् ; B1.4 अभि प्रेष्यान् ( for अपि प्रेष्यान् ).—$^{d}$) Ś1 D6 सुखिनः; B3( also as in text ).4 G3 सर्वे च; G1 सर्वैश्च; M3 सर्वे ते ( for सर्वे स्म ). Ś1 Ñ1 स( Ñ1 स्व )सुखोषिताः; D6 स्म सुखो°; B1.4 सुसुखोचिताः. G1 illeg. from षि in $^{d}$ up to भगव in 7$^{a}$.—For 6$^{cd}$, D2.4.5.7 subst. :

2045* सपानयुग्यसारथ्याः सुखं विप्रतिबोधिताः ।

[ D2.5 -युग( D5 °ग्माः )सारक्षाः. D2.5 सुखविप्रतिबा( D5 °बो )-धनाः ( for the post. half ). ]

7 $^{a}$) Ś1 Ñ2 V1 B Dm1 D1.3.6 G2 M1 Cg त्वां; Dg1 Dd1 T3 M2–4 त्वा; G3 [ ऽ ]यं ( for ऽहं ). D2.4.5.7

आश्रमं तस्य धर्मज्ञ धार्मिकस्य महात्मनः ।
आचक्ष्व कतमो मार्गः कियानिति च शंस मे ॥ ८

इति पृष्टस्तु भरतं भ्रातृदर्शनलालसम् ।
प्रत्युवाच महातेजा भरद्वाजो महातपाः ॥ ९

भरतार्धतृतीयेषु योजनेष्वजने वने ।
चित्रकूटो गिरिस्तत्र रम्यनिर्दरकाननः ॥ १०

उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी ।
पुष्पितद्रुमसंछन्ना रम्यपुष्पितकानना ॥ ११

अनन्तरं तत्सरितश्चित्रकूटश्च पर्वतः ।
तयोः पर्णकुटी तात तत्र तौ वसतो ध्रुवम् ॥ १२

दक्षिणेनैव मार्गेण सव्यदक्षिणमेव च ।
गजवाजिरथाकीर्णां वाहिनीं वाहिनीपते ।
वाहयस्व महाभाग ततो द्रक्ष्यसि राघवम् ॥ १३

G. 2. 101. 15
B. 2. 92. 14
L. 2. 105. 16

---

आज्ञापयस्व. —$^{b}$) Dd1 Dm1 ( after corr. *sec. m.* as in text ) T2 G3 M2.4 Cg त्वम् ( for त्वाम् ). Ś1 Ñ1 B1.2.4 D6 मामनुज्ञातुमर्हसि; Ñ2 B3 अनुज्ञातुं त्वमर्हसि; D1–5.7 अनुज्ञातस्त्वया सुखी( D1 °खं ). —$^{c}$) T3 समीपस्थं ( for °पं प्र- ). Ś1 Ñ B D2.7 भ्रातुः समीपं यास्यामि( B4 पश्या* ); V1 D1 ससैन्यं गच्छमानं मां. —$^{d}$) Ś1 Ñ B D4.6.7 शुभेन; D2.3.5 शिवेन ( for मैत्रेण ).

8 $^{a}$) D1 तं समाचक्ष्व ( for तस्य धर्मज्ञ ). —$^{b}$) Ś1 D1.6 राघवस्य ( for धार्मिकस्य ). —$^{cd}$) T3 G M1.2 कतरो; Cm.g.t as in text ( for °मो ). G2 रामः ( sic ) ( for मार्गः ). Dm1 क्रियानति; G1 क्रियानीति; G3 क्व यातीति; Cm.g.t as in text ( for क्रियानिति ). Ś1 Ñ B D2–7 आचक्ष्व केन मार्गेण गच्छेयं भगवन्नहं; V1 D1 M4 कस्मिन्देशे कुतो मार्गो योजनानि च शंस मे. —After 8, Ś1 Ñ B D6 ins. :

2046* योजनानि कतीतश्च कस्मिन्देशे स आश्रमः ।
स सीतालक्ष्मणसखो धर्मात्मा यत्र वर्तते ।

[ ( l. 1 ) B4 क्रि** ( illeg ). Ś1 D6 योजनैः कतिभिश्चैव ( for the prior half ). —( l. 2 ) Ñ2 B3.4 ससीतो ( for स सीता- ). Ś1 D6 तिष्ठति ( for वर्तते ). ];
while M3 ins. :

2047* योजनानि महाभाग सर्वमेतन्ममानघ ।

9 $^{b}$) Dg1 राम-; Dt1 T3 G2.3 M1 भ्रातुर् ( for भ्रातृ- ). —G1 damaged after भ्रा in 9$^{b}$ up to प्रत्यु in 9$^{c}$. —For 9, Ś1 Ñ V1 B D1–7 M4 subst. :

2048* इति पृष्टस्तदा तेन भरतेन महात्मना ।
ततः स भरतं धीमान्महर्षिरिदमब्रवीत् ।

[ ( l. 1 ) B2.4 D2.5 तथा ( for तदा ). —( l. 2 ) Ñ2 V1 B3 D2 श्रीमान् ( for धी° ). ]

10 $^{a}$) M3 [ अ ]र्धं ( for [ अ ]र्ध- ). V1 -तृतीये तु. —$^{b}$) V1 B4 Dg1 योजने वि( Dg1 स्व )जने. —$^{c}$) Dt1 चित्रकूट-. Ś1 Ñ V1 B D1.3.4.6.7 M4 तात ( for तत्र ). —$^{d}$) Ś1 D4.6.7 रम्यो ( for रम्य- ). Ś1 निर्जन-; B Dd1 Dm1 D4.6 G2.3 -निर्झं ( D4.6 °र्जं )र-; D7 -निर्कर- ( sic ); Ck.t as in text ( for -निर्दर- ). B1.3 Ck -कंदरः ( for -काननः ). Ñ2 रम्यनिर्वारकंदरः; V1 D1.3 T3 रम्यकानननिर्झरः; D2.5 सुरम्यं चि( D5 °म्यश्चि )-त्रकाननं( D5 °नः ).

11 $^{a}$) V1 उत्तरे; D3 उत्तर- ( for उत्तरं ). Ś1 Ñ V1 B D1–7 M4 आश्रित्य ( for आसाद्य ). —$^{b}$) D2.4.5.7 T3 M3 तत्र ( for तस्य ). —G1 damaged from म in द्रुम up to का in 11$^{d}$. —$^{d}$) Ś1 Ñ V1 B D1–7 M4 नानापक्षिनिषेविता( Ñ2 B3 °समाकुला ).

12 $^{b}$) Dt1 T1 Cv.k.t चित्रकूटं च पर्वतं. —$^{c}$) G2 M1 तत्र ( for तात ). —For 12, Ś1 Ñ V1 B D1.3.6 M4 subst.:

2049* तामन्तरा च सरितं चित्रकूटं च पर्वतम् ।
तयोः पर्णकुटीं तत्र द्रक्ष्यसि त्वं सुसंवृताम् ।

[ ( l. 1 ) D3 तदंतरा; M4 अंतरा तां ( by transp. ) ( for तामंतरा ). —( l. 2 ) Ś1 D6 ततः; M4 तत्र ( for तयोः ). V1 पत्रकुटीं. M4 तात ( for तत्र ). Ś1 Ñ द्रष्टासि; D6 द्रक्षासि. Ś1 सुखं वृतां. M4 वसतस्तत्र तौ ध्रुवं ( for the post. half ). ]

—Thereafter Ś1 D6 cont.; D2.4.5.7 subst. for 12 :

2050* तदन्तराश्च सरितश्चित्रकूटस्य चैव हि ।
वाल्मीकेराश्रमो दिव्यो महर्षेस्तत्र राघवः ।
कृत्वाश्रमपदं रम्यमेकान्ते सहलक्ष्मणः ।
सीतया भार्यया सार्धं वसतीति मया श्रुतम् ।

[ Ś1 D6 om. l. 1. —( l. 2 ) Ś1 D6 आश्रमं दिव्यं. D4.7 आश्रमस्तस्य( D7 °त्र ) वाल्मीकेर् ( for the prior half ). —( l. 3 ) D4 तत्र ( for कृत्वा ). D7 आश्रमपदं ( subm. ) ( for कृत्वाश्रमपदं ). D2 दिव्यं ( for रम्यं ). —( l. 4 ) D2 स ( for [ इ ]ति ). D1 श्रुतं मया ( by transp. ). ]

13 $^{a}$) B2 तु; Dg1 Dt1 Dd1 Dm1 च; Ck.t as in text ( for [ ए ]व ). —$^{b}$) Dd1 Dm1 T2 G1.3 M3 सव्यं; Cm as in text ( for सव्य- ). T1 G2 M1 वा; Ck as in text ( for च ). M4 दक्षादक्षिण नित्यदा. —$^{c}$) Dg1 Dt1 Dd1 Dm1 -समाकीर्णां ( for -रथाकीर्णां ). —$^{d}$) M4 वाहिनी यातु राघव. —$^{f}$) G1 तत्र; M1 गतो ( for ततो ). Dd1 द्रक्ष्यामि ( sic ); G1 प्रेक्ष्यसि ( for द्रक्ष्यसि ). G1.3 राघवौ. —For 13, Ś1 Ñ V1 B D1–7 subst. :

2051* दक्षिणेनैव मार्गेण दक्षिणाशां प्रदक्षिणम् ।
गजवाजिरथाकीर्णा वाहिनी यातु राघव ।

G. 2. 101. 16
B. 2. 92. 14
L. 2. 105. 16

प्रयाणमिति च श्रुत्वा राजराजस्य योषितः ।
हित्वा यानानि यानार्हा ब्राह्मणं पर्यवारयन् ॥ १४
वेपमाना कृशा दीना सह देव्या सुमित्रया ।
कौसल्या तत्र जग्राह कराभ्यां चरणौ मुनेः ॥ १५
असमृद्धेन कामेन सर्वलोकस्य गर्हिता ।
कैकेयी तस्य जग्राह चरणौ सव्यपत्रपा ॥ १६
तं प्रदक्षिणमागम्य भगवन्तं महामुनिम् ।
अदूराद्भरतस्यैव तस्थौ दीनमनास्तदा ॥ १७
ततः पप्रच्छ भरतं भरद्वाजो दृढव्रतः ।
विशेषं ज्ञातुमिच्छामि मातॄणां तव राघव ॥ १८
एवमुक्तस्तु भरतो भरद्वाजेन धार्मिकः ।
उवाच प्राञ्जलिर्भूत्वा वाक्यं वचनकोविदः ॥ १९
यामिमां भगवन्दीनां शोकानशनकर्शिताम् ।
पितुर्हि महिषीं देवीं देवतामिव पश्यसि ॥ २०
एषा तं पुरुषव्याघ्रं सिंहविक्रान्तगामिनम् ।
कौसल्या सुषुवे रामं धातारमदितिर्यथा ॥ २१
अस्या वामभुजं श्लिष्टा यैषा तिष्ठति दुर्मनाः ।
कर्णिकारस्य शाखेव शीर्णपुष्पा वनान्तरे ॥ २२

---

[ (l. 1) B3 दक्षिणानां; B4 दक्षिणां शं (sic) ( for °णाशां ). Ś1 Ñ1 D6 दक्षिणाशा प्रदक्षिणा; V1 D1.3–5.7 सदा दक्षिण यातु ते; D2 सैन्येयं तत्र यातु ते ( for the post. half ). —(l. 2) Ś1 D6 -गणाकीर्णा; D1 -समाकीर्णा ( for -रथा° ). V1 D1–5.7 वाहिनीपते; B2 यातु राघवं ( for यातु राघव ). ]

—After 13, M4 ins. :

2052* प्रातिष्ठत ततः प्रीतो भरतो भ्रातृतृष्णया ।

14 $^{a}$) G1 तं; M3 तच् ( for च ). Ñ1 श्रुत्वा रामस्य वृत्तांतं; D2.4.5.7 प्रयातां वाहिनीं श्रुत्वा; M4 प्रयातोयमिति श्रुत्वा. —$^{b}$) Ś1 D6 भारद्वाजस्य वै तदा. —Ś1 D6 om. 14$^{cd}$. —$^{c}$) G( ed. ) मानार्हं( for यानार्हा ). —$^{d}$) Ñ2 B3 तं मुनिं; D3 तमृषिं ( for ब्राह्मणं ). Ñ1 भरद्वाजमवारयन् . —For 14$^{cd}$, D2.4.5.7 subst. :

2053* भरद्वाजमृषिश्रेष्ठमभिगम्य प्रणम्य च ।

[ D4.7 अभिजग्मुरपूजयन् ( for the post. half ). ]

15 $^{a}$) B1 वेपमान- ( for °माना ). —$^{b}$) Ñ2 दिव्या ( for देव्या ). B4 सुमित्रहा; D1 सुमंत्रया ( for सुमित्रया ). —$^{c}$) M3 कौसल्यां (sic). Ś1 D6 प्रति-; Ñ1 B Dg1 Dt1 Dd1 Dm1 D2–5.7 G1.2 M तस्य ( for तत्र ). —$^{d}$) D2 पाणिभ्यां ( for कराभ्यां ). Ś1 Ñ V1 B D1–3.5.6 उभौ; D4.7 शुभौ ( for मुनेः ).

16 $^{b}$) Ś1 D6 -लोकेषु ( for -लोकस्य ). B1 गर्हितां; T3 गर्हितः (sic). G2 M3 सर्वलोकविगर्हिता. —$^{c}$) V1 D1–5.7 M4 चरणौ ( for कैकेयी ). Ś1 Ñ B D6 चापि; Dg1 Dt1 D3 T3 M3 तत्र ( for तस्य ). —$^{d}$) Ñ B लज्जयान्विता; T1.2 G3 M2 सा व्यपत्रपा; T3 न व्यपत्रपा; G1 तौ व्यपत्रपा; G2 चाव्यपत्रपा; M1 वा व्यपत्रपा; Cm.g.t as in text ( for सव्यपत्रपा ). Ś1 D6 महर्षेश्चरणौ तदा; V1 D1–5.7 M4 कैकेयी लज्जयानता( D1 ततः; D2 °न्विता; D4.5.7 तदा ).

17 $^{a}$) Ñ1 om. तं ( subm. ). G( ed. ) आगत्य ( for आगम्य ). Ś1 D6 प्रदक्षिणं समासाद्य; D3 तं तदक्षिणमागत (sic); L( ed. ) प्रदक्षिणं समागम्य. —$^{c}$) V1 भरतस्येव; D4.7 °श्चैव; D5 भरताश्चैव ( for भरतस्यैव ). Ś1 Ñ B1–3 D6 सुमित्रा भरताभ्यासे. —$^{d}$) T3 तथा ( for तदा ). Ś1 Ñ V1 B D6 M4 तस्थौ दीना( Ś1 D6 हृदि ) समाकुला. D1–5.7 तस्थुर्दैन्यः( D1 °र्दीनाः ) समाकुलाः( D4.7 °हिताः ).

18 $^{a}$) Dt1 तत्र ( for ततः ). V1 पप्रच्छ भरतं तत्र. —$^{b}$) Dt1 महामुनिः; Cg as in text ( for दृढव्रतः ). —$^{c}$) D2.4.5.7 नाधि( D5 °भि )गच्छामि ( for ज्ञातुमिच्छामि ). —$^{d}$) Ś1 Ñ B D1–7 G1 M4 तिसृणां तव; V1 तिष्ठतां तत्र ( for तव राघव ).

19 $^{a}$) Ñ2 B3 च ( for तु ). D2–5.7 ततः प्रणम्य ( for एवमुक्तस्तु ). —$^{b}$) B1 धीमता ( for धार्मिकः ). D2–5.7 भरद्वाजमुवाच ह. —$^{cd}$) Ś1 Ñ B D6 वाक्यमिदं( Ñ2 B3 °त्थं ) ( for भूत्वा वाक्यं ). D2–5.7 विशेषं वाग्विशेषज्ञो द्विजातेर्ज्ञातुमिच्छतः.

20 $^{a}$) V1 D2.3.5 साध्वीं ( for दीनां ). —$^{b}$) T2 [ अ ]-नदार- (sic). Ś1 Ñ V1 B D1–7 शोकोपहतचेतसं( V1 D1.3.6 °नां; B3 D5.7 °सां ). —$^{c}$) Ś1 Ñ V1 B2–4 D6 स्थितां सा ( Ś1 V1 D6 चा )श्रुमुखीं साध्वीं( V1 B3 [ also ] दीनां ); B1 D1–5.7 M4 स्थितामश्रुमुखीं दीनां( M4 देवीं ). —$^{d}$) M3 पश्यसे ( for °सि ).

21 $^{a}$) B3 पुरुषव्याघ्र; D3 पुरुषं व्याघ्र-. —$^{b}$) Dd1 Dm1 T G1.3 M3 Ck व्याघ्र( T1 ह्रस्व )विक्रांतगामिनं; D2 मत्तमातंग°; D7 सिंहविक्रांतलोमिनं; G2 व्याघ्रवृत्तंम° (sic); M1 व्याघ्रविक्रम°; Cg.t as in text. —$^{c}$) D2–5.7 [ अ ]जनयद् ( for सुषुवे ). —After 21, Dm1 ins. राम.

22 Ś1 D6 om. 22. —$^{a}$) V1 Dd1 Dm1 D1.3 G2.3 M1 वामं; Cg as in text ( for वाम- ). B4 -भुजा-; T2 -भुज-; Cg as in text. V1 B2 M4 श्लिष्य; B3 T3 श्लिष्ट्वा; M3 स्पृष्ट्वा; Cg as in text ( for श्लिष्टा ). —$^{b}$) Dt1 या सा; Cg.t ( with hiatus ) एषा ( for यैषा ). —After 22$^{ab}$, Dt1 ins. :

2054* इयं सुमित्रा दुःखार्ता देवी राज्ञश्च मध्यमा ।

—$^{d}$) Ñ V1 B2–4 D1.3 M4 शीर्णपर्णा; B1 °वर्णा; Dt1 G3 °पुष्प-; Cg as in text ( for °पुष्पा ). —For 22, D2.4.5.7 subst.; while D3 ins. after 22 :

एतस्यास्तौ सुतौ देव्याः कुमारौ देववर्णिनौ ।
उभौ लक्ष्मणशत्रुघ्नौ वीरौ सत्यपराक्रमौ ॥ २३
यस्याः कृते नरव्याघ्रौ जीवनाशमितो गतौ ।
राजा पुत्रविहीनश्च स्वर्गं दशरथो गतः ॥ २४
ऐश्वर्यकामां कैकेयीमनार्यामार्यरूपिणीम् ।
ममैतां मातरं विद्धि नृशंसां पापनिश्चयाम् ।
यतोमूलं हि पश्यामि व्यसनं महदात्मनः ॥ २५

इत्युक्त्वा नरशार्दूलो बाष्पगद्गदया गिरा ।
स निशश्वास ताम्राक्षो क्रुद्धो नाग इवासकृत् ॥ २६
भरद्वाजो महर्षिस्तं ब्रुवन्तं भरतं तदा ।
प्रत्युवाच महाबुद्धिरिदं वचनमर्थवत् ॥ २७
न दोषेणावगन्तव्या कैकेयी भरत त्वया ।
रामप्रव्राजनं ह्येतत्सुखोदर्कं भविष्यति ॥ २८
अभिवाद्य तु संसिद्धः कृत्वा चैनं प्रदक्षिणम् ।
आमन्त्र्य भरतः सैन्यं युज्यतामित्यचोदयत् ॥ २९

G. 2. 101. 33
B. 2. 92. 32
L. 2. 105. 33

2055* यां चैतां शोकसंतप्तां निःश्वसन्तीं मुहुर्मुहुः ।
भुजंगीमिव दुःखार्तां कौसल्यासहितां स्थिताम् ।

[ (l. 1) D2 तामिमां; D3 यां त्वेतां; D5 यामेतां ( यां चैतां ). D2.3.5.7 निश्वसंतीं. —(l. 2) D3 शोकार्तां ( for दुःखार्तां ). ]

23 $^{a}$) Dt1 तु; G1 यौ ( for तौ ). Ś1 Ñ V1 B D1–7 ब्रह्मन् ( for देव्याः ). —$^{b}$) Ś1 Ñ V1 B D1–7 M4 -रूपिणौ; Dm1 -वर्णितौ ( for -वर्णिनौ ). —$^{c}$) D2.6 तुल्यौ ( for उभौ ). —$^{d}$) Ś1 वीरसत्यपराक्रमौ; D2.4.5.7 वीर्यसत्त्वपराक्रमौ( D2.5 °मैः ). —After 23, Ś1 Ñ V1 B D1–7 M4 ins. :

2056* पश्यस्युद्विग्नहृदयामहृष्टवदनां स्थिताम् ।
सुमित्रां जननीमेतां लक्ष्मणस्यावधारय ।

[ Ś1 D2.4–7 transp. l. 1 and 2. —(l. 1) D5 पश्यामि ( for पश्यसि ). Ś1 V1 D4–7 M4 अप्रहृष्टमुखीं; D2 अपहृष्टासुखं- (sic) ( for अहृष्टवदनां ). —(l. 2) Ś1 D1.3–7 M4 [ उ ]पधारय. ]

24 $^{a}$) V1 अस्याः ( for यस्याः ). M3 नरव्याघ्रो. —$^{b}$) Ś1 Ñ V1 B1–3 D1–7 T3 M4 वनवासम्; G M1 राज्यनाशम्; Cg.k.t as in text ( for जीवनाशम् ). M3 गतः ( for गतौ ). B4 वनवासगतौ च तौ. —$^{c}$) Dm1 G राज- ( for राजा ). Dg1 विहीनस्य ( sic ) ( for °नश्च ). Ś1 Ñ V1 B D1–7 M4 राजपुत्रौ नरेंद्रश्च( V1 D3.5 °स्य ). —$^{d}$) Dg1 D3 ययौ ( for गतः ). —Aftre 24, V1 B3.4 Dg1 Dt1 Dd1 Dm1 D1.3 S ins. :

2057* क्रोधनामकृतप्रज्ञां दृप्तां सुभगमानिनीम् ।

[ D1 M1 -प्राज्ञां( M1 after corr. *sec. m.* as above ); D3 -प्रज्ञा-. B3.4 च शुभ- ( for सुभग- ). V1 M1 ( before corr. ) -मालिनीं; Dd1 -भामिनीं; Cg as above ( for -मानिनीम् ). ]

25 $^{a}$) D1 ऐश्वर्यमानां ( for °कामां ). —$^{b}$) Ś1 Ñ B D6 पतिघातिनीं ( for आर्यरूपिणीम् ). —For 25$^{ab}$, D2.4.5.7 subst., while Ñ B D6 ins. after 25$^{cd}$ :

2058* सैषा तिष्ठति कैकेयी नृशंसा पापनिश्चया ।
[ B2.4 यैषा. D7 ति**. ]

—$^{c}$) V1 [ ए ]नां; Dg1 [ ए ]व; G M1–3 तां; M4 [ इ ]मां ( for [ ए ]तां ). D2.4.5.7 जननीं ( for मातरं ). —$^{d}$) D2.4.5.7 कैकेयीं ( for नृशंसां ). Ś1 Ñ1 B2.4 D1–7 M4 कुलपांसि( B2.4 D1.2.4.6.7 °स )नीं( D3 °सनां ); Ñ2 V1 B1.3 कुलपांसुलां( V1 °सलीं; B1 °सलां; B3 °सुलीं ) ( for पापनिश्चयाम् ). —$^{e}$) Ñ V1 B1–3 ( m. also एतन्- ) D1–7 M4 अतो-; B4 एतन् ( for यतो- ). V1 समिद्धि ( sic ); M3 व्रलं हि ( sic ) ( for -मूलं हि ). Dg1 पश्यामो ( for पश्यामि ). —$^{f}$) B1 सुमहात्मनः ( for महदा° ).

26 $^{a}$) Ś1 D6 स नरव्याघ्रो ( for नरशार्दूलो ). —$^{c}$) Dg1 हि ( for स ). Ñ V1 B Dg1 D1.2.4–7 M4 निशश्वास स ( by transp. ). Ś1 D3 निःशश्वास सुताम्राक्षः; Dt1 विनिश्वस्य स ताम्राक्षः; T3 G3 विनिशश्वास ताम्राक्षः. —$^{d}$) G1 गज ( for नाग ). Dt1 T2 श्वसन् ( for [ अ ]सकृत् ). Ś1 Ñ V1 B D1–7 M4 क्रुद्धो( Ñ1 D4.7 पंके ) वनगजो यथा.

27 B4 om. 27$^{ab}$. —$^{a}$) Ś1 Ñ B1–3 D2.4.5.7 T1 G1.3 M3.4 तु; D3 त्वं ( for तं ). —$^{b}$) Ś1 D2.4–7 ब्रुवाणं; B2 व्रजंतं ( for ब्रुवन्तं ). Ś1 Ñ V1 D3.6 तथा; D2 यथा ( for तदा ). —$^{c}$) V1 इत्युवाच ( for प्रत्यु° ). G1 -बुद्धिम् ( for -बुद्धिर् ). —$^{d}$) Ś1 Dt1 T3 अर्थवित्; Ñ1 G2 अब्रवीत् ( for अर्थवत् ).

28 $^{a}$) D2 प्रदोषेण ( for न दोषेण ). Dd1 Dm1 D4.5.7 G3 M4 [ इ ]ह; D2 [ अ ]पि; G1 M3 [ ए ]व; Cg as in text ( for [ अ ]व- ). Ś1 D1–3.6 T2 M4 -मंतव्या; Cg.k as in text ( for -गन्तव्या ). —$^{b}$) D2.5 कदाचिदपि कैकयी. —$^{c}$) B1 -प्रव्राजितं. D4.5.7 तु ( for हि ). B4 श्चेतत् (sic). —After 28, Dt1 Dd1 Dm1 D4 T G M1.2 ins. :

2059* देवानां दानवानां च ऋषीणां भावितात्मनाम् ।
हितमेव भविष्यद्धि रामप्रव्राजनादिह ।

[ (l. 1) Dd1 Dm1 च महात्मनां ( for भाविता° ). Dd1 Dm1 T1 om. l. 2. —(l. 2) D4 भविष्यं हि; T3 भविष्येद्धि ( for भविष्यद्धि ). ]

29 $^{a}$) Ś1 तु संसिद्धिं; Ñ1 महर्षिं तं; Ñ2 B2.3 D1 M4 तु तं सिद्धं; V1 D6 G1 तु संसिद्धं; B1 तु तं सिद्धिं; B4 ततः सिद्धिं; Dd1 Dm1 [ अ ]थ संसिद्धः; D2.5 ऋषिं सिद्धं; D3 मुनिं सिद्धं; Cr.m.g.k.t as in text ( for तु संसिद्धः ). —$^{b}$) D3 वा ( for च ). Ś1 V1 B1 D2.3.5.6 [ अ ]सि-; Ñ2 B2–4 D1.4.7 M4 [ अ ]पि; Dt1 T3 [ ए ]व; M3 [ ए ]वं ( for [ ए ]नं ). —V1 repeats 29$^{cd}$ after 35. —$^{d}$) V1 ( first time ) B2 चोदयत् ( sic ); Dt1 चाब्रवीत्; D1–3 [ अ ]नोदयत् ( for [ अ ]चोदयत् ).

G. 2. 101. 34
B. 2. 92. 33
L. 2. 105. 33

ततो वाजिरथान्युक्त्वा दिव्यान्हेमपरिष्कृतान् ।
अध्यारोहत्प्रयाणार्थी बहून्बहुविधो जनः ॥ ३०
गजकन्या गजाश्चैव हेमकक्ष्याः पताकिनः ।
जीमूता इव घर्मान्ते सघोषाः संप्रतस्थिरे ॥ ३१
विविधान्यपि यानानि महान्ति च लघूनि च ।
प्रययुः सुमहार्हाणि पादैरेव पदातयः ॥ ३२
अथ यानप्रवेकैस्तु कौसल्याप्रमुखाः स्त्रियः ।
रामदर्शनकाङ्क्षिण्यः प्रययुर्मुदितास्तदा ॥ ३३
स चार्कतरुणाभासां नियुक्तां शिबिकां शुभाम् ।
आस्थाय प्रययौ श्रीमान्भरतः सपरिच्छदः ॥ ३४
सा प्रयाता महासेना गजवाजिरथाकुला ।
दक्षिणां दिशमावृत्य महामेघ इवोत्थितः ।
वनानि तु व्यतिक्रम्य जुष्टानि मृगपक्षिभिः ॥ ३५

30 $^{a}$) Ś1 V1 Dd1 Dm1 D4 G M1–3 Cr.m.gp युक्तान्; Ñ1 युक्ता (sic); B3 मुक्त्वा; D3 युंक्त्वा; D7 मुक्तान्; Cg as in text.—$^{b}$) Ś1 Ñ2 V1 B D1.3.6 M4 दिव्य-; T3 नागान् (for दिव्यान्). Ñ B1.3 -परिच्छदान्; Dt1 -विभूषितान्. D2.4.5.7 रुक्मभांडपरिच्छदान्.—$^{c}$) D2 अध्यरोहन्; D6 आध्यरोहन्; M4 आरुरोह (for अध्यारोहत्). Ś1 Ñ1 V1 B1.2 Dg1 Dt1 Dd1 Dm1 D1–3.6.7 T1.3 G M1.2 प्रयाणार्थं (D2 °र्थैं; D7 °र्था [sic]); Cg as in text.—$^{d}$) M4 वाहं (for बहून्). D3 बहुविधा जनाः.

31 $^{a}$) Ś1 Ñ V1 B D1–3.5.6 गजयोधा; D4.7 अश्वयोधा; T3 G3 करिण्यश्च; Cr.m.g.t as in text (for गजकन्या). D1 गजांश्च (for गजाश्च). M4 गजाश्चित्रकुथाश्चैव.—$^{b}$) Ñ2 V1 B Dg1 Dm1 D3.4.7 -कक्षाः; D1 -कक्षान्; Cg as in text (for -कक्ष्याः). M4 हेमकक्ष्यातिशोभिनः.—$^{c}$) T2 M4 जीमूत. Dg1 reads $31^{d}$ in marg.—$^{d}$) Ś1 D6 संहृष्टाः; Ñ2 B संघ(B1.4 °ह)र्षात्; V1 महौघाः; D4.5.7 सुघोराः (for सघोषाः). V1 lacuna for संप्रत. Ñ1 संप्रहर्षात्प्रतस्थिरे.

32 $^{a}$) Ñ2 B त्रिविधानि (for विवि°). Ś1 Ñ B1.2.4 D6 [अ]थ; V1 B3 D1–3.5 M4 च (for [अ]पि).—$^{b}$) Ś1 Ñ B D6 बृहंति (for महान्ति). Dg1 T3 [अ]पि (for च).—$^{c}$) D2 प्रयुज्य (for प्रययुः).—$^{d}$) Ś1 B D1–3.6 M4 पदस्थाश्च; Ñ1 D4.7 बलस्थाश्च; Ñ2 पदस्थाने; V1 [अ]धितिष्ठाय; D5 रथाश्चैव; Ck पदैरेव (for पादैरेव). D4.5.7 पताकिनः.

33 $^{a}$) Ñ2 -प्ररेकैस् (for -प्रवेकैस्). Ś1 Ñ V1 B2–4 D1.2.4–7 ताः (for तु). B1 -प्रवेकस्थाः (m. also °किस्ताः).—$^{b}$) D2.4.5.7 कौशल्याद्या नृपस्त्रियः.—$^{c}$) D5 अन्वयुर्भरतं यांतं.—$^{d}$) Ñ2 V1 B D1 ततः; M3 स्त्रियः (for तदा). D2.4.5.7 पुत्रदर्शनलालसाः (D4.7 °विह्वलाः).

34 $^{a}$) Dg1 Dt1 Dd1 Dm1 G2 M1 Cm.g.t चंद्रार्क-; Cr as in text (for स चार्क-). Ś1 Ñ B D1–7 स चापि (B1.4 चाति-; B2 भाभिस्) तरुणार्काभां.—$^{b}$) Ś1 Ñ V1 B D3.6 T1 M4 सु(Ñ2 स्व; V1 B4 T1 M4 सं)युक्तां; D1.2.4.5.7 प्रयुक्तां; Cm.g.t as in text (for नियुक्तां). Ñ1 तदा (for शुभां).—$^{c}$) Ś1 Ñ B1–3 D6 धीमान् (for श्रीमान्).—After 34, D2–5.7 ins. 2060*.

35 $^{a}$) Ñ2 B1–3 D4.7 संप्रयाता (for सा प्र°). Ś1 Ñ V1 B D1.2.4–7 M4 बभौ सेना (for महासेना).—$^{b}$) Ś1 Ñ B Dt1 Dd1 Dm1 D6 -समाकुला; G3 -नराकुला (for -रथाकुला). D2 श्रीमद्गजरथाकुला; D3 रथवाजिगजाकुला; D4.7 श्रीमद्ध्वजसमाकुला; D5 श्रीमद्धयरथाकुला.—$^{c}$) T1 दक्षिणं देशम्. Ś1 Ñ V1 B D1.6 M4 आस्थाय; D2–5.7 आश्रित्य (for आवृत्य).—$^{d}$) Ś1 Dm1 G2 M1.3 इवोत्थिता (Ś1 °ताम्); V1 D3 -चरस्वना; D1.2.4.7 -रव(D2 °त)स्वना(D4 °रा); M4 इवाबभौ (for इवोत्थितः). D5 महामेघौघनिःस्वनाः.—After $35^{cd}$, Ś1 Ñ V1 B D1.6 M4 ins., while D2–5.7 ins. after 34:

2060* सुमन्त्रस्त्वनुयात्रेण सहितः स पताकिना ।
सज्जावरणयन्त्रेण वीरो भरतमन्वगात् ।

[(l. 1) Ñ1 D2–5.7 शत्रुघ्नस्; Ñ2 शतघ्नस् (sic) (for सुमन्त्रस्). Ś1 D3.6 च (for तु). B2.3 M4 [आ]नुयात्रेण; B4 [अ]नसूयोपि (for [अ]नुयात्रेण). V1 D1 महता; D4 स निहितः (hypm.) (for सहितः). V1 D1 सु-; D2.3.5 तु (for स). Ś1 -पताकिनी; Ñ1 पदातिभिः; B2 पताकिनः; D2.5 पदातिना (for पताकिना).—(l. 2) Ś1 D6 सज्जवारण-; B1 सज्जाभरण-; D3 सज्जीव*ण-; M4 सज्जीकरण-. D2.4.5.7 M4 -मात्रेण (for -यन्त्रेण). D1 धीरो (for वीरो). Ñ1 D2–5.7 भ्रातरम् (for भरतम्). V1 D1–4.7 M4 अन्व(D4 °न्वि)यात्. B4 वीरोपि रथमन्वगात् (for the post. half).]

—$^{e}$) Ś1 Ñ B Dt1 D2.3.5.6 T3 च (for तु). V1 बलान्यत्त (sic) (for वनानि तु).—$^{f}$) D7 तुष्टानि (for जुष्टानि).—After 35, Ś1 Ñ B D1–7 M4 ins.:

2061* अगाधां मीनकलिलां यमुनामतरन्नदीम् ।

[D1.3 ग्राहसंपूर्णां (for मीनकलिलां). Ś1 Ñ1 D2.4–7 अगाधमीनस(Ś1 Ñ1 D6 °क)लिलां; M4 गाधामपारवेगां तां (for the prior half). B4 गतश्च यमुनां नदीं; D3 अतरद्यमुनां नदीं (by transp.) (for the post. half).];

while V1 repeats $29^{cd}$; Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. after 35:

2062* गङ्गायाः परवेलायां गिरिष्वपि नदीषु च ।

[G2 गंगायां. T2 परिवेलायां. Dt1 गिरिष्वथ नदीष्वपि (for the post. half).]

सा संप्रहृष्टद्विपवाजियोधा
वित्रासयन्ती मृगपक्षिसंघान् ।
महद्वनं तत्प्रविगाहमाना
रराज सेना भरतस्य तत्र ॥ ३६

इति श्रीरामायणे अयोध्याकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

## ८७

तया महत्या यायिन्या ध्वजिन्या वनवासिनः ।
अर्दिता यूथपा मत्ताः सयूथाः संप्रदुद्रुवुः ॥ १
ऋक्षाः पृषतसंघाश्च रुरवश्च समन्ततः ।
दृश्यन्ते वनराजीषु गिरिष्वपि नदीषु च ॥ २
स संप्रतस्थे धर्मात्मा प्रीतो दशरथात्मजः ।
वृतो महत्या नादिन्या सेनया चतुरङ्गया ॥ ३
सागरौघनिभा सेना भरतस्य महात्मनः ।
महीं संछादयामास प्रावृषि द्यामिवाम्बुदः ॥ ४

G. 2. 102. 5
B. 2. 93. 4
L. 2. 106. 5

---

36 $^{a}$) V1 सुमंत्रप्रहृष्ट-; B4 सायं प्रहृष्ट-; D1 G1 सुसंप्रहृष्ट-; D7 सा संप्रविष्ट-; M3 सा संप्रहृष्टा ( for सा सं प्रहृष्ट- ). V1 B4 D3 T2 G3 -द्विज-; B3 -प्रिय- ( for -द्विप- ). B3 -राजि- ( for -वाजि- ). Dt1 -यूथान् ; T1.2 -यूथा ( for -योधा ). —$^{b}$) Dm1 विचासयंती ( for वित्रासयन्ती ). V1 मृगराज-. Dd1 Dm1 -यूथान् ( for -संघान् ). —$^{c}$) Ś1 Ñ V1 B Dd1 D1–7 M4 महावनं. Ś1 B4 D6 परिगाहमाना; V1 Dd1 G3 प्रतिगाहमाना; D2.4.7 प्रतिबाधमाना; D3 प्रतिधावमाना ( for प्रविगाह° ).—$^{d}$) M2.4 तस्य ( for तत्र ). Ś1 Ñ B D1.6 नरेंद्रपुत्रस्य रराज सेना; V1 ययौ तदा वै भरतस्य सेना.

Colophon.—*Sarga name* : Ś1 D6 भरतानुयानं; Ñ B1–3 भरतानुज्ञा; V1 भरद्वाजानुज्ञा; B4 यमुनालंघनं; D1.3 भारद्वाजाभ्यनुज्ञा; D2 भरतपर्वणि भरतवनप्रवेशः; D4.7 भरतप्रयाणं( D7 °णः ); D5 भरतपर्वणि भरद्वाजानुज्ञा. —*Sarga no.* ( figures, words or both ) : Ś1 Ñ1 B1.4 D3.6 om.; Ñ2 D5 101; V1 D4 97; B2 D7 M4 99; B3 D2 100; Dg1 Dt1 Dd1 Dm1 T G M1–3 92; D1 153.—After colophon, Dm1 concludes with राम; G with श्रीरामाय नमः.

### 87

Dm1 begins with ॐ; M1.2 with श्रीरामाय नमः.

1 $^{a}$) B4 तथा ( for तया ). Ś1 वाजिन्या; B3 M1 ( after corr. *sec. m.* as in text )यामिन्या; D4.6.7 वाहिन्या; D5 योधिन्या ( for यायिन्या ).—$^{b}$) B1 om. ( hapl. )ध्वजिन्या. —$^{c}$) Ś1 Ñ B तत्र; T2 वृत्ताः ( for मत्ताः ). V1 अर्दंति यूथपोन्मत्तान् ; D6 अर्दिता यूपणस्तत्र. —$^{d}$) B4 संयूथा; D2 सदीर्घा ( for सयूथाः ). Ś1 Ñ V1 B D1–7 विप्रदुद्रुवुः.

2 $^{a}$) D2 रक्षाः. Dt1 -मुख्याश्च; Cm.g as in text ( for -संघाश्च ). D3 ऋक्षाः पुरुषसमाश्च; D7 ऋक्षा वराहसंघाश्च; G3 ऋक्षाः पृषदसंघाता; M3 ऋक्षाः पृक्षतसंघाश्च. —$^{b}$) Ñ2 रुरंतश्च; V1 वारणाश्च; B3 रुवंतश्च; B4 रुरुवश्च; Dg1 त*वश्च; D2 तिर्यक्षाश्च; D4.7 दुद्रुवुश्च; T2 गुरवश्च; Cr.m.g.t as in text ( for रुरवश्च ). —$^{c}$) D7 G3 दृश्यते. Dt1 वनवाटेषु. V1 D1.3 M4 अदृश्यंत( M4 व्यदृशीयंत ) वने दुर्गे. —$^{d}$) Ś1 Ñ V1 B D1–7 M4 पर्वतेषु ( for गिरिष्वपि ). D2.5 वनेषु ( for नदीषु ).

3 $^{a}$) V1 om. स ( subm. ). D1 G1 संप्रतस्थे स ( by transp. ). —$^{b}$) Ś1 Ñ B D2–7 धीमान् ( for प्रीतो ).—Ñ2 B1.2 read and B3 repeats $3^{cd}$ after 7. —$^{c}$) B2 महात्मन् ( for महत्या ). Ñ2 B1.2.4 नदंत्या; B3 नंदंत्या; Dd1 Dm1 G3 M2 यायिन्या; Cg.k.t as in text ( for नादिन्या ).—For $3^{cd}$, Ś1 Ñ1 V1 D1–3.6 M4 subst.; D4.5.7 subst. l. 1 only, while Ñ2 B ins. after $3^{ab}$ ( B3.4 l. 3 after 3 ) and D5 ins. l. 2–3 after $6^{ab}$ :

2063* वृतो योधैर्महावीर्यैः शब्दवाणाग्रवेधिभिः ।
भरतस्तु महाप्राज्ञो भ्रातृदर्शनकाङ्क्षया ।
मृगव्यालानुचरितं प्रविवेश महद्वनम् ।

[ Ñ2 repeats 2063* ( except the prior half of l. 1 ) wrongly after सा तु त ( see $4^{b}$ var. ) in $4^{b}$. —( l. 1 ) Ñ1 महात्मान्या ( sic ); B1 repeats ( ditto. ) ( for महावीर्यैः ). B2 सर्व-; D1.2 शूरैर् ( for शब्द- ). Ñ2 ( both times ) D1.2.4.6.7 M4 -वालाग्र-; D5 -वालेग्र- ( for -वाणाग्र- ). Ñ1 वीर्यशब्दवेवेधिभिः ( sic ); B4 शब्दवानुग्रवेधिभिः ( for the post. half ). —Ñ1 om. l. 2. —( l. 3 ) V1 -व्याघ्र- ( for -व्याल- ). V1 D1–3 M4 महावनम. ]

4 D4.5.7 om. $4^{ab}$. —$^{a}$) D1 G1 -समा ( for -निभा ). B4 सागरौघा महासेना. —$^{b}$) Ś1 V1 D6 भरतस्यानुगामिनी; Ñ B D1–3 M4 सा तु त( after त Ñ2 repeats 2063* [ cf. v.l. 2063* ] )स्यानुगामिनी. —D2 repeats $4^{c}$–5 after $6^{ab}$. —$^{c}$) D2 ( second time ) स छादयामास; M4 प्रच्छादयामास. —$^{d}$) V1 प्रावृषीं ( sic ); D2( second time ).4.5.7 सैन्येन ( for प्रावृषि ). D2 ( second time ) द्यौरिवांबुदैः; D4.5.7 द्यामिवांबुदैः; Cv.g.k as in text ( for द्यामिवाम्बुदः ).

G. 2. 102. 6
B. 2. 93. 5
L. 2. 106. 6

तुरंगौघैरवतता वारणैश्च महाजवैः ।
अनालक्ष्या चिरं कालं तस्मिन्काले बभूव भूः ॥ ५

स यात्वा दूरमध्वानं सुपरिश्रान्तवाहनः ।
उवाच भरतः श्रीमान्वसिष्ठं मन्त्रिणां वरम् ॥ ६

यादृशं लक्ष्यते रूपं यथा चैव श्रुतं मया ।
व्यक्तं प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ॥ ७

अयं गिरिश्चित्रकूटस्तथा मन्दाकिनी नदी ।
एतत्प्रकाशते दूरान्नीलमेघनिभं वनम् ॥ ८

गिरेः सानूनि रम्याणि चित्रकूटस्य संप्रति ।
वारणैरवमृद्यन्ते मामकैः पर्वतोपमैः ॥ ९

मुञ्चन्ति कुसुमान्येते नगाः पर्वतसानुषु ।
नीला इवातपापाये तोयं तोयधरा घनाः ॥ १०

किन्नराचरितोद्देशं पश्य शत्रुघ्न पर्वतम् ।
हयैः समन्तादाकीर्णं मकरैरिव सागरम् ॥ ११

एते मृगगणा भान्ति शीघ्रवेगाः प्रचोदिताः ।
वायुप्रविद्धाः शरदि मेघराज्य इवाम्बरे ॥ १२

---

5 D2 repeats 5 after $6^{ab}$ (cf. v.l. 4). —$^{a}$) Ś1 V1 B2.3 D6 G2 M1.3.4 तुरगौघैर्; Ñ2 B1.4 D2(first time).3 तुरगोवैर्; Cg as in text (for तुरंगौघैर्). Ś1 अचवती (sic); B1 विसर्पद्भिर्; Dm1 अवदता (sic); Cm.g as in text (for अवतता). Ñ1 तुरगो:*रवतता; D2(second time).5.7 तुरगौघेण महता. D4 खुरघोषेण महता. —$^{b}$) Ś1 Ñ V1 B D1–3.6 M4 [अ]चलोपमैः; Dt1 Dd1 Dm1 महाबलैः; D2(second time).4.5.7 घनोपमैः (for महाजवैः). —V1 om. $5^{cd}$–6. —$^{c}$) D2 (second time) अनालंब्या; D4.5.7 °लक्षा; T2 G3 °रक्ष्या (for अनालक्ष्या).—$^{d}$) Ś1 Ñ B D1.2(both times)–7 M4 देशे (for काले). Ś1 Ñ B Dt1 Dd1 Dm1 D2(second time).4.6.7 Ct सा; D2 (first time)च; D5 ह (for भूः). —After 5, D3–5 ins., D2 ins. after 5 (r.); D7 after $6^{ab}$:

2064* तामतीत्याटवीं घोरां नदीस्तीर्त्वा महाबलः ।

[ D2 महाजलाः; D4.7 बहूदकाः (for महाबलः). ]

6 V1 om. 6 (cf. v.l. 5). —$^{a}$) Ś1 Ñ1 Dt1 D1–7 स गत्वा; B1 अगत्वा (for स यात्वा). —$^{b}$) Ś1 Ñ2 B1–3 D3.6 अपरिश्रांत-; B4 उपविश्रांत-; T3 G2.3 सपरि° (for सुपरि-श्रान्त-). Dd1 -वाहनं (for -वाहनः). —After $6^{ab}$, D2 repeats $4^{c}$–5, D5 ins. l. 2–3 of 2063* and D7 reads 2064*. —$^{c}$) Dt1 वचनं (for भरतः). Ś1 Ñ2 B D6 धीमान्; Ñ1 D2–5.7 वाक्यं (for श्रीमान्). —$^{d}$) Ś1 Ñ B D1.2.4–7 शत्रुघ्नं शिष्टसंमतम्.

7 $^{a}$) V1 T3 तादृशं; Cg.k.t as in text (for यादृशं). T1 दूरं; Cg.t as in text (for रूपं). —$^{b}$) Ś1 Ñ B1.2.4 D2–7 यादृशं च (for यथा चैव). B3 Dt1 मया श्रुतं (by transp.) V1 यादृशं वनमग्रतः. —$^{c}$) Ś1 D6 प्राप्तोस्मि. —$^{d}$) D2.3 भारद्वाजो. Ś1 Ñ B2–4 D2.4–7 यथाब्रवीत्; B1 **ब्रवीत्; Ck [ऽ]यमब्रवीत्. —After 7, Ñ2 B1.2 read and B3 repeats $3^{cd}$.

8 $^{b}$) Ś1 Ñ V1 B D1.3.6 इयं; D2.4.5.7 एषा; T3 तदा (for तथा). —$^{c}$) V1 तत्प्राकाशयते (for एतत्प्रकाशते). —$^{d}$) Ñ2 नीलं (for नील-). V1 -निभस्वनं; B4 ** वनं (for -निभं वनम्).

9 $^{b}$) M4 सांप्रतम्. —$^{c}$) Dm1 (before corr.) D3 चारणैर् (for वारणैर्). Ś1 एव दृश्यंते; B3.4 अवनृत्यंते; D1.2.5 अवमृज्यंते; D7 अवमृद्यंतं; G2 M1 अवमर्द्यंते; Cg.k.t as in text (for °मृद्यन्ते).

10 $^{a}$) Ś1 Ñ B D6 कुसुमं चित्रं; V1 D1 M4 (also *sec. m.*) कुसुमं नीला; D2–5.7 कुसुमं दिव्यं; M4 कुसुमान्नीलान् (for कुसुमान्येते). —$^{b}$) Ś1 Ñ1 V1 D4 M3.4 नागाः; Ck.t as in text (for नगाः). —$^{c}$) Ś1 V1 B2 D2.4 G2 तपापाये; Cr.g.k.t as in text (for [आ]तपापाये). —$^{d}$) Ś1 Ñ1 तोये; B1 तोय-; Dm1 marg. (for तोयं). Ś1 D6 जलदराशयः; Ñ B धूमोष्ण(B2 °स्तु (sic); B4 °मौव)योनयः; V1 जलधरा इव; D1.3 जलधरा घनाः; D2 जलचरा यथा; D4.7 जलधरा-श्रयाः; D5 जलधरा गिरौ; M4 सलिला घनाः (for तोयधरा घनाः).

11 Ś1 Ñ V1 B D1.6 M4 transp. 11 and 12. —$^{a}$) Ś1 D6 -[आ]चरितं चेमं; Ñ1 V1 B1 Dg1 Dt1 D1–5.7 T2 M4 Cg -[आ]चरितं देशं (for -[आ]चरितोद्देशं). —$^{b}$) V1 D1 M4 सर्वशः; Dg1 Dt1 पर्वते; D3 मर्दितं; Cg as in text (for पर्वतम्). —$^{c}$) B1 T1.2 मृगैः (for हयैः). Ś1 Ñ V1 B D1–7 M4 मदीयैर् (for समन्ताद्). —$^{d}$) D2.4.7 सुपर्णैर्; D5 सुवर्णैर् (for मकरैर्). Ś1 Ñ V1 B1–3 D1.3.6 सागरं मकरैरिव (by transp.); B4 समुद्रं मकरैरिव.

12 Ś1 Ñ V1 B D1.6 M4 transp. 11 and 12. —$^{b}$) Ś1 Ñ2 V1 B D3.6 G1 M4 प्रधाविताः (for प्रचोदिताः). D1.2.4.5.7 शीघ्रवेग(D4.5.7 °मेव)प्रधाविताः. —$^{c}$) Ś1 D6 -प्रणुन्नाः; Ñ2 V1 B D2–4.7 G2 M1 -प्रवृद्धाः; T3 -प्र*द्धाः; Cg.t as in text (for -प्रविद्धाः). —$^{d}$) V1 D1.3 मेघसंघा; B3 मेघवाय (sic); B4 मेघवल्या (sic); Dg1 Dt1 Ct मेघजाला; D2.4.5 मेघराजा(D5 ज°); T3 G3 मेघराजिर्; M1 मेघराशिर्; Ct*p* as in text (for मेघराज्य).

G. 2. 116. 3
B. 2. 108. 2
L. 2. 121. 2

साधु राघव मा भूत्ते बुद्धिरेवं निरर्थका ।
प्राकृतस्य नरस्येव आर्यबुद्धेस्तपस्विनः ॥ २
कः कस्य पुरुषो बन्धुः किमाप्यं कस्य केनचित् ।
यदेको जायते जन्तुरेक एव विनश्यति ॥ ३
तस्मान्माता पिता चेति राम सज्जेत यो नरः ।
उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्यचित् ॥ ४
यथा ग्रामान्तरं गच्छन्नरः कश्चित्कचिद्वसेत् ।
उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ ५
एवमेव मनुष्याणां पिता माता गृहं वसु ।
आवासमात्रं काकुत्स्थ सज्जन्ते नात्र सज्जनाः ॥ ६
पित्र्यं राज्यं समुत्सृज्य स नार्हसि नरोत्तम ।
आस्थातुं कापथं दुःखं विषमं बहुकण्टकम् ॥ ७

अतः परमिमां प्रज्ञां प्राज्ञैरनुपसेविताम् ।
कामादात्मकृतां मिथ्या नाभिगन्तुं त्वमर्हसि ।
त्यजन्ति गुरवस्तात कामलोभवशंगताः ।
ऋचीक इव पुत्रं स्वं शुनःशेफं नरोत्तमम् ।
न हि त्वां स्वर्गतस्तात पितोपालब्धुमर्हति । [15]
यस्मात्तेषु शरीरेषु शरीरान्तरमास्थितः ।

[ M4 om. up to युक्तं in l. 1 (cf. v.l. 2236*). —(l. 1) M4 सत्पुरुष (for नरवर). D1.3 राम पि(D3 भ्रा)त्रा यदुक्तं ते तत्सत्यं कर्तुमर्हसि. —(l. 2) Ñ1 illeg. for मारभ्य. D3 समारभत्वथा (sic). —(l. 3) Ñ B1.2 निर्वेदोद्दीपितो; B4 निर्वेदाज्ञापितो; D1.3 M4 न त्वि(D1 °न्वि)दानीमितो (for निर्वेदाद्दीपितो). Ñ1 B1.3.4 नागंतुम्; D1.3 M4 आगंतुम् (sic) (for मा गन्तुम्). D1 अर्हति (sic). —(l. 4) M4 -[अ]भियोगेन धर्मे (for -[अ]भिरामेण राज्ये). —(l. 5) D1.3 न तु तेनैव तातेन; M4 तत्ते तातेन तेनैव (for the prior half). B3.4 D1 M4 पूर्वदत्तम् (for पूर्वं दत्तम्). —(l. 6) M4 उपयाचति (for एव याचते). —(l. 7) D1 तदेकं; D3 M4 तदेवं (for तवेदं). B1.2(m. also as above)-4 कल्मषं; G(ed.) कलुषं (for कश्मलं). Ñ2 B1 प्रभो (for विभो). —(l. 8) B4 च (for [इ]यं). B2 सहपुत्रा; B3 च सुमित्रा (for [इ]यं सपुत्रा). Ñ B [अ]सौ (for सा). D1.3 M4 तुभ्यं राज्यं (by transp.). B3 प्रदास्यति (for प्रयच्छति). —(l. 9) D1.3 गृहीत्वा (for गृहाण). M4 पुरं याहि (for प्रजाः पाहि). M4 त्वं जनं (for स्वजनं). —(l. 11) D1.3 M4 ना(D1 ता)तः परमिमां प्राज्ञ (for the prior half). —(l. 12) B3.4 मदकृतां (for आत्मकृतां). D1.3 M4 कामात्मना कृतां पित्रा प्रतिज्ञां कर्तुमर्हसि. —(l. 13) D1.3 त्यजंते; M4 त्यज्यंते (for त्यजन्ति). —(l. 14) D1.3 M4 पुत्रेण (for पुत्रं स्वं). Ñ2 शुनःशेपं. D1.3 M4 शुनःशेफे(M4 °पे)न राघव (for the post. half). —(l. 15) D3 तु (for हि). M4 पिता चालब्धुमर्हति (for the post. half). —(l. 16) Ñ2 तस्मात्तेषु; D1.3 तेषु तेषु; M4 भस्मांतेषु (for यस्मात्तेषु). D3 om. (hapl.?) शरीरेषु. B1 M4 आश्रितः (for आस्थितः).]

2 $^{a}$) D2.4 राम च (for राघव). Ś1 Ñ B D1-7 M4 ते भूद् (by transp.) (for भूत्ते). —$^{b}$) G1 मतिर्; Cg.t as in text (for बुद्धिर्). D1.3 एषा; D4.7 G1.3 M4 एव; Ct as in text (for एवं). B2.3 Dt1 Dd1 Ct निरर्थिका; D2-4.7 निरर्थकी; G2 निवर्तका (for निरर्थका). —Note hiatus between $^{c}$ and $^{d}$. —$^{c}$) Ś1 Ñ B D2.4-7 नरस्य प्राकृतस्य (by transp.). D7 G1 [ए]व (for [इ]व). —$^{d}$) Ś1 D6 धीरबुद्धेस्; Ñ B गर्ह्या(Ñ2 °र्ह्य) बुद्धिस्; Dg1 Dt1 Dd1 Dm1 T1.2 G M1 ह्यार्यबुद्धेस् (to avoid hiatus); D1.2.4.5.7 हा(D4 [इ]हा; D5 का)र्यबुद्धेस्; D3 M4 हास्यबुद्धेस्; M3 भार्याबुद्धेस् (for आर्यबुद्धेस्). T1.2 मनस्विनः; M3 तरस्विनः; Cr.t as in text (for तपस्विनः). —After 2, Ñ B ins. 2237*.

3 $^{a}$) D2 किं (for कः). —$^{b}$) Ś1 Ñ B D1-7 किं कार्यं; G3 किमार्यः (for किमाप्यं). Ś1 D6 M4 केन कस्य(by transp.)चित्(M4 वा). —$^{c}$) Ś1 D1.7 M4 यद्ये(M4 °दै)को; Dt1 Ct एको हि (for यदेको). —$^{d}$) B1 एवं (for एव). B1 विदंस्यति; D1 विवश्यति (for विनश्यति). —After 3, D2 ins.:

2238* दिष्टयार्थं हि परिष्वज्य नान्यज्जगति किंचन ।
योह्यदृष्टे मनो धत्ते पश्यन्नपि स मुह्यति ।

4 B1 om. 4. —$^{a}$) Ś1 B2-4 D1-7 [ए]व (for [इ]ति). —$^{b}$) Dd1 Dm1 G2.3 M1.3 सज्ज्येत; Ct as in text (for सज्जेत). Ś1 Ñ B2-4 D1-7 प्रतिश्रयसमावुभौ; M4 संज्ञैषा विष्ठिता विभो. —$^{c}$) D4 कुबुद्धिर् (for उन्मत्त). D2.5 एव; T1 इति (for इव). B3.4 विज्ञेयो; Dg1 Dm1 D1 संज्ञेयो; M4 संज्ञैषा (for स ज्ञेयो). Ś1 D6 उत्तमस्तु स विज्ञेयो. —$^{d}$) Ś1 D6 यो(Ś1 य)त्र जानाति वै नरः; Ñ B2-4 D2-5.7 योत्र(Ñ2 B2 °नु) सज्जेत(D2-5.7 °ज्जति) वै नरः(B3 पुनः).

5 $^{a}$) B4 [आ]श्रमांतरं. —$^{b}$) Dt1 Ct बहिर्वसेत्; D4 वसेत्कचित् (by transp.) (for कचिद्वसेत्). Ś1 D6 नरः कस्मादपि कचित्. —$^{c}$) D5 तं (for च). Dm1 तथावासं; D5 निवासं च; M1 तमायासं (for तमावासं). —$^{d}$) B3 प्रातिष्ठत; D1.2.7 प्रतिष्ठेच्च; D4 प्रतिष्ठं च (for प्रतिष्ठेत). G1 परे (for [अ]परे).

6 $^{b}$) G1.3 क्षेत्रं (for माता). D2 पिता गृहवसन्नपि (sic). —$^{c}$) Ś1 आभास- (for आवास-). —$^{d}$) Ś1 D4.6.7 तत्र सज्जति(D6 सज्जंति; D7 मज्जंति) वै नरः(D6 °राः); Ñ B D1.3 M4 तत्रा(B1 °वा)लं बाल(D3 °लि)चिंतया(B4 °वत्तया); D2.5 नात्र सज्जेत वै नरः.

7 $^{ab}$) T M2 परित्यज्य (for समुत्सृज्य). Ś1 D2.4-7 निरर्थं जनमुत्सृज्य(D5 °ष्टं) (for $^{a}$). D2 स वार्हति; D5 न चार्हति; D7 स नार्हति (for स नार्हसि). Ñ B D1.3 M4 नीरजस्कं समं हित्वा पंथानमकुतोभयं. —$^{c}$) G2 M1.2 दुर्गं; Cr.m.g as in text (for दुःखं). Ś1 D6 आसितुं विषमं

समृद्धायामयोध्यायामात्मानमभिषेचय ।
एकवेणीधरा हि त्वां नगरी संप्रतीक्षते ॥ ८
राजभोगाननुभवन्महार्हान्पार्थिवात्मज ।
विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे ॥ ९
न ते कश्चिद्दशरथस्त्वं च तस्य न कश्चन ।
अन्यो राजा त्वमन्यश्च तस्मात्कुरु यदुच्यते ॥ १०
गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै ।
प्रवृत्तिरेषा मर्त्यानां त्वं तु मिथ्या विहन्यसे ॥ ११
अर्थधर्मपरा ये ये तांस्ताञ्शोचामि नेतरान् ।
ते हि दुःखमिह प्राप्य विनाशं प्रेत्य भेजिरे ॥ १२
अष्टका पितृदैवत्यमित्ययं प्रसृतो जनः ।
अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥ १३
यदि भुक्तमिहान्येन देहमन्यस्य गच्छति ।
दद्यात्प्रवसतः श्राद्धं न तत्पथ्यशनं भवेत् ॥ १४

G. 2. 116. 24
B. 2. 108. 15
L. 2. 121. 14

दुर्गं; Ñ B D1.3 M4 आस्थातुं नार्हसे वीर; D2.4.5.7 आस्थातुं विषयं किंचिद्. —d ) Ś1 D6 विपिनं; Ñ B D1 M4 कापथं; D3 पंथानं ( for विषमं ). D4 बहुसंकटं.

8 b ) M4 सक्षिप्रम् ( for आत्मानम् ). —c ) D1 -चरा (for -धरा). Dt1 Dd1 Dm1 D5 T G1.3 M Cr.t त्वा (for त्वां ). —d ) D1 नगरं ( sic ). B2 D1 त्वां( D1 सा ) प्रतीक्षते; B4 Dg1 D3-5 संप्रतीक्ष्यते; Dt1 स प्रतीक्ष्यते ( for संप्रतीक्षते ).

9 a ) D1.3 G2 M1.4 राम भोगान्; D6 राजयोगान् ( for राजभोगान् ). —b ) D1 T3 M2 पार्थिवात्मजः. Ś1 D2.4-7 महात्मन्पार्थिवो भव. —d ) T2 त्रिविष्टपः ( for °पे ). D2 यथा शक्तस्त्रिवटपे ( sic ).

10 a ) G2 ये कश्चिद् ( for ते कश्चिद् ). D1 दशरथं (sic). —b ) B4 कश्चित्तस्य; M3 तस्य त्वं च ( by transp. ) ( for त्वं च तस्य ). B1 कंचन ( for कश्चन ). —c ) Ś1 अतो; D2 अपि ( for अन्यो ). Ś1 Ñ B Dd1 Dm1 D1-4.7 G2 M1.4 अप्यन्यस् ; Dt1 M3 Ct अन्यस्तु; D5 अन्यस्य; D6 अप्यंतस् ( for अन्यश्च ). —d ) Ś1 Ñ1 B2 D1.4.6.7 यदुच्यसे; T2.3 यथोच्यते; Cr.g.t as in text ( for यदुच्यते ). —After 10, Ñ B Dg1 Dt1 Dd1 Dm1 D1.3.7 S ins. :

2239* बीजमात्रं पिता जन्तोः शुक्लं रुधिरमेव च ।
संयुक्तमृतुमन्मात्रा पुरुषस्येह जन्म तत् ।

[ ( l. 1 ) D3 पितुर् ; M3 पुरा ( for पिता ). M4 पितुर्जातं. Ñ B Dg1 Dt1 Dd1 D1.3.7 Ct शुक्रं; Cv शुक्ल-; Cr.m.g as above ( for शुक्लं ). Dt1 Dd1 Dm1 D1.3.7 Ct शोणितम् ; Cv.r.m.g as above ( for रुधिरम् ). Ñ B रुधिरवायु( B3 °हि )ना; M4 रुधिरधातुना. —( l. 2 ) B4 M4 संसक्तम् ( for संयुक्तम् ). Dg1 M3 ऋतुवन् ; Cr.m.g.t as above ( for ऋतुमन् ). Ñ B D1.3 M4 ऋतुना मा( B4 °मृ )तुः; Dm1 ऋतुसन्मात्रा. Ñ B [ आ ]त्म-; D1.3 M4 [ अ ]थ; M2 [ इ ]व ( for [ इ ]ह ). B2.4 -जन्मकृत्; T1 जन्मतः; G2 जन्म ह; M4 जन्मनि ( for जन्म तत् ). Dd1 Dm1 शुक्लं तच्छुक्र( Dm1 °क्र )शोणितं ( for the post. half ). ]

11 a ) M4 गतवान् ( for गतः स ). —b ) Ś1 D3.4.6.7 M4 तेन यत्र ( by transp. ); B4 तेन तत्र; Dg1 यत्र येन; G2 यत्र मे न; Cr.m.g.t as in text ( for यत्र तेन ). D2 ते वनैः (sic). —c ) D4 प्रकृतिर् ( for प्रवृत्तिर् ). G2 M1 एष ( sic ) ( for एषा ). Ś1 Ñ B Dt1 Dd1 Dm1 D2-7 G1 M4 भूतानां; Cr.m.g.t मर्त्यानां( as in text ). —d ) B1 विहन्यते; B4 वितन्यसे ( for विहन्यसे ). Ś1 D4.6.7 मिथ्यानुतप्यसे; D1.3 M4 मोहाद्विहन्यसे; D2.5 मोहान्न बुध्यसे.

12 a ) Ś1 D4-7 परलोकगता; Ñ B D1.3 M4 अर्थ( B D3 °थ )धर्मविदो; Dm1 अथ धर्मपरा; D2 परं लोकागतं ( for अर्थधर्मपरा ). D1 वै; Ct as in text ( for first ये ). B1 ते; Dg1 तां; Dd1 Dm1 च; Ct as in text ( for second ये ). —b ) Ñ1 B2.3 D1.3 M4 पृच्छामि; Ñ2 पृच्छसि; B4 इच्छामि; G1 पश्यामि; Ct as in text ( for शोचामि ). B3 D1.3 M4 ते न( D1 व )रान्; Dg1 तत्परान् ( sic ); Cg as in text( for नेतरान् ). Ś1 D4.6.7 तांस्ताञ्शोचति को नरः; B1 तानापृच्छामि नेतरान् . —c ) D2 ते ( for हि ). Ś1 D4.6.7 परिप्राप्य; Ñ B D1.3 M4 इदं प्राप्य; D2.5 परं प्राप्य; G( ed. ) अनुप्राप्य ( for इह प्राप्य ). —d ) D1 M4 प्रतिजज्ञिरे; T1 प्रेत्य लेभिरे; Ct*p* प्रतिपेदिरे.

13 a ) Dg1 D1.5 अष्टकाः; Cv.r.m.g.t अष्टका ( as in text ). Ñ1 Dt1 Dd1 Dm1 G2 M1.3 Ct -देवत्यम् ; Ñ2 B1.3 -दे( B1 -दै )वेष्टिः; B2 -दैवत्यः; B4 -देवेभ्यः; D1.3.5.7 -दैवत्या; D2 T3 M4 -देवत्या; Cv.r.m.g as in text ( for -दैवत्यम् ). T1 पि***त्यम् ( damaged ). Ś1 D6 L( ed. )अष्टकापि तथा( L[ ed. ]ततः; D6 पितुः ) कार्या. —b ) Ś1 Ñ1 D2.4.5.7 इत्येवं प्रा( D2.4 प्र )कृतो; Ñ2 B कार्यामि( Ñ2 °र्येभि; B4 °र्याति )प्रसृतो; D1.3 M4 इत्यभिप्रस्थितो ( for इत्ययं प्रसृतो ). —c ) Ñ2 B3 अर्थस्य; B1 D2.3 अन्यस्य; B2 जनस्य; D7 छत्रस्य [ sic ] ( for अन्नस्य ). B4 M4 अन्नं( B4 °न्य ) सोपद्रवं. B4 D3 पश्यन् ( for पश्य ). —d ) D1 वृतो ( for मृतो ). Ś1 D4.7 किमशिष्यते; D5 परितुष्यति ( for किमशिष्यति ). Ñ2 B मृते किम( Ñ2 B1 °मि )वशिष्यते; D2 किं मृतो हि विशिष्यति.

14 a ) B4 भुक्ताम्; M3 भक्तम् ( for भुक्तम् ). B2 [ आ ]-द्येन; D1 [ अ ]ह्नेन; D5 [ अ ]न्यस्य ( for [ अ ]न्येन ). —b ) Ñ2 B1.3.4 D1.3 M4 कायम् ; B2 कार्यम् ( for देहम् ). —c ) Ñ2 Dt1 Ct प्रवसतां; B4 प्रसवतः( meta. ); Cr.m.g as in text ( for प्रवसतः ). B2 दद्युः प्रसरतः श्राद्धं; D1.3.4.7 M4 श्राद्धं ( D4.7 तथा ) प्रवस( D1 °सव [ meta. ]; D3 °भव )तो देयं.

G. 2. 115. 25
B. 2. 108. 16
L. 2. 121. 15

दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः ।
यजस्व देहि दीक्षस्व तपस्तप्यस्व संत्यज ॥ १५

स नास्ति परमित्येव कुरु बुद्धिं महामते ।
प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥ १६

—$^d$) Ñ1 B D1.3.5 M4 स; D2 om. (subm.) (for तत्). Ñ B D1–3.5 M4 पथ्यो (Ñ2 °थ्या; B4 °च्यो; D1 M4 °थ्य)-दनं (for पथ्यशनं). Ñ2 B1 D1 M4 वहेत्; B4 महत्; D2.5 हरेत् (for भवेत्). Ś1 D4.6.7 नास्य पाथेयमाहरेत्.

15 $^a$) Ś1 D6 दानसत्त्वपरा; Ñ B3 D2–5.7 °संवर्धना; B1.2 D1 °संवर्णना; B4 °संसर्हदा; Dg1 °संवदना; M1 °संवनता; M2 दानं संवनना; M3 °संवहना; M4 °संवर्तका; Cg as in text (for दानसंवनना). —$^b$) G2 श्रद्धा (for ग्रन्था). Ś1 M3 मेधाव(M3 °वि)धिः; D6 सेवाविधिः (for मेधाविभिः). —$^c$) D2 दिक्षस्थस्; Cv दिविक्ष (sic) (for दीक्षस्व). —$^d$) Ś1 तप्यं च; B2 तप्यं तु; D6 तप्यंश्च (for तप्यस्व). Dm1 गच्छति; M4 नित्यशः; Cm as in text (for संत्यज).

16 $^a$) M4 त्वं (for स). Ñ B पर (for परम्). Ñ1 B1.2 Dt1 Dd1 Dm1 M4 Ct [ए]तत्; Ñ2 [ए]वं; B3.4 [ए]तां; Cv as in text (for [ए]व). Ś1 D2–7 ब्र(D2 मा; D3.5 स)नास्तिक(D4.7 °कां)परमेवं(D2–6 °व); D1 नास्ति परममित्येतां. —$^b$) D2 महावने (for महामते). —$^c$) D5 यत्र तिष्ठंत. Ñ1 B1 परोक्षमानं (Ñ1 °न)च कार्षीः; Ñ2 परोक्षमायतं कार्षीः; B2–4 D1.3 M4 परोक्षं(D1.3 M4 °क्षे)मा मनः (B2–4 मतं) कार्षीः. —$^d$) Ñ B D1.3 M4 प्रत्यक्षं(M4 °क्षे) कुरु राघव (B1 missing for कुरु राघव). —After 16, D2.4.7 ins.:

2240* तस्मादभ्यागतां लक्ष्मीं मावमंस्था नरर्षभ ।
प्रपद्य विपुलं राज्यं निःसपत्नमकण्टकम् ।
इति श्रुत्वा वचस्तस्य मन्दक्रोधोऽपि राघवः ।
महर्षिं प्रति चुक्रोध नास्तिक्यमनुदर्शितः ।

[(l. 1) D2 नावमंथा (sic); D7 मानसंस्था (sic) (for मावमंस्था). —(l. 2) D7 निःसंपन्नम् (for निःसपत्नम्).]

—D2.4.7 cont.; Ś1 D5.6 ins. after 16; Dg1 Dt1 Dd1 Dm1 S ins. l. 1–4 after 2. 101. 29, l. 5–20 after 2. 101. 30 and l. 21–26 after 2249*; while D1.3 ins. l. 17–20 only after 2. 101. 29:

2241* अमृष्यमाणः पुनरुग्रतेजा
निशम्य तन्नास्तिकवाक्यहेतुम् ।
अथाब्रवीत्तं नृपतेस्तनूजो
विगर्हमाणो वचनानि तस्य ।
तेनैवमाज्ञाय यथावदर्थ- [5]
मेकोदयं संप्रतिपद्य विप्राः ।
धर्मं चरन्तः सकलं यथाव-
त्काङ्क्षन्ति लोकागममप्रमत्ताः ।
निन्दाम्यहं कर्म पितुः कृतं त-
द्यस्त्वामगृह्णाद्विषमस्थबुद्धिम् । [10]
बुद्ध्यानयैवंविधया चरन्तं
सुनास्तिकं धर्मपथादपेतम् ।
यथा हि चोरः स तथा हि बुद्ध-
स्तथागतं नास्तिकमत्र विद्धि ।
तस्माद्धि यः शक्यतमः प्रजानां [15]
स नास्तिकेनाभिमुखो बुधः स्यात् ।
त्वत्तो जनाः पूर्वतरे वराश्च
शुभानि कर्माणि बहूनि चक्रुः ।
जित्वा सदेमं च परं च लोकं
तस्माद्द्विजाः स्वस्ति कृतं हुतं च । [20]
न नास्तिकानां वचनं ब्रवीम्यहं
न नास्तिकोऽहं न च नास्ति किंचन ।
स चापि कालोऽयमुपागतः शनै-
र्यथा मया नास्तिकवागुदीरिता ।
निवर्तनार्थं तव राम कारणा- [25]
त्प्रसादनार्थं च मयैतदीरितम् ।

[(l. 1) D7 अमृष्यमाणाः (sic). G1 -तेजसा. —(l. 2) Ś1 निरस्य (for निशम्य). —D2 om. (hapl.?) after नास्ति up to स्वस्ति in l. 20. Ś1 D4–7 -वाक्यमुत्तमम्; M2 -हेतुवाक्यम् (by transp.) (for -वाक्यहेतुम्). —(l. 3) D5 अथो (sic); G3 तथा (for अथ). D5 नृपतितनूजो; G1.3 नृपतिः स्म भूयो (for नृपतेस्तनूजो). —(l. 4) G1 निगर्हमाणो. —Ś1 D6 om. l. 5–8. —(l. 5) D4.7 तथा तदर्थम्; D5 यथावदार्थः. —(l. 6) D2.5 एकादयः; T2 एकोदयः. D2.4.5.7 संप्रतिपाद्य (for °पद्य). —(l. 7) D5 धर्मे चरंतं; T1 धर्मं च मत्तः (for धर्मं चरन्तः). —(l. 8) D2 कः कामलोभावगमप्रमत्तः; D4.5.7 कः कामलोभागमसं(D5 °म)प्रवृत्तः(D7 °मत्तः). —(l. 9) Ś1 D4–7 पितुः कथं; Dt1 Dd1 Dm1 Ct कृतं पितुस् (by transp.); D2 कथं पितुस् (for पितुः कृतं). Ś1 न; D2.4.5.7 तु; D6 नु (for तद्). —(l. 10) Ś1 यस्ताम् (sic); M4 यस्त्वाम् (for यस्त्वाम्). Ś1 D2.4–7 भृशमर्थ-(D2 °मंद-); Dg1 Dd1 विषमस्य; Cr.m.g.t as above (for विषमस्थ-). Dm1 -बुद्धिः; Cm -बुद्धिं (as above). —(l. 11) Ś1 D6.7 तयैवं-; D2 न चैवं-; D4.5 तयैवं-; T2 [अ]नयैव (for [अ]नयैवं-). Dg1 D5 T1.2 -विधमाचरंतं; G3 -विषमं(यं) चरंतः; Cr.m.g.t as above (for -विधया चरन्तं). —(l. 12) Ś1 D4.6.7 अनास्तिकं; Dg1 स्वनास्तिकं; Cg as above (for सुनास्तिकं). T3 कर्म- (for धर्म-). Ś1 D6.7 -पथा(D7 °थ) व्यपेतं; D2 -पथाद्यपेतं; D5 -पथा ह्यपेतं (for -पथादपेतम्). D4 धर्ममथ व्यपेतं. —Ś1 D6 om. l. 13–16. —(l. 13) M4 यथापि- (for यथा हि). Dg1 D2.4.5.7 चौरः; T1 लोकः; Cg as above (for चोरः). D2.4.5.7 तथा(D2.5 °ता)-र्थलुब्धस् (for तथा हि बुद्धस्). —(l. 14) D2 वयं (for -गतं). D2 -उप्रबुद्धिं; D4.7 अत्र सिद्धं (for अत्र विद्धि). D5 दंब्धस्तथा नास्तिकयुक्तबुद्धिः; M4 तथागता नास्तिकमत्रसिद्धिः. —(l. 15) Dg1 M4 या; M3 यत्; Cg as above (for यः). Dg1 M4 Cm.g शक्यतमाः(M4 °मतः); Cv.rp.mp.t शक्यतमः (as above). ❀ Cv: [s]शक्यतम इति सम्यक् पाठः । ❀ D2 तस्मादि यत्र कांतारं

सतां बुद्धिं पुरस्कृत्य सर्वलोकनिदर्शिनीम् । | राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः ॥ १७

G. 2. 116. 27
B. 2. 108. 18
L. 2. 121. 0

इति श्रीरामायणे अयोध्याकाण्डे शततमः सर्गः ॥ १०० ॥

(sic); $D_{4.7}$ न स्याद्धि तत्कांततरं; $D_5$ तस्मान्न कांतारतरं. $D_{2.5}$ द्विजानां (for प्रजानां). —(l. 16) $Dd_1$ $Dm_1$ $G_{2.3}$ M $Cv.r.m.g$ न; $G_1$ तं; Ct as above (for स). $D_{2.5}$ नास्तिको यो($D_5$ ना)प्यसुखी; $D_{4.7}$ नास्तिको नास्ति($D_7$ °थ) सुखी; $G_3$ $M_3$ नास्तिको नाभिमुखो; $M_4$ नास्तिकस्याभिमुखो. $D_{2.7}$ सुखी; $D_4$ om.; $D_5$ नरः (for बुधः). —After l. 16, $D_{2.4.5.7}$ ins., while $Ś_1$ $D_6$ ins. after l. 12 (owing to om.):

2241(A)* ततस्तु जाबालिरुदीक्ष्य राम-
मायस्तरूपं भृशलोहिताक्षम् ।
उवाच वाक्यं मृदुपूर्वमन्य-
थथानुरूपं परमार्थवच्च ।

[(l. 4) $D_2$ क्रियानुरूपं; $D_{4.5.7}$ कथानुरूपं.]

—$D_2$ om. l. 17–20. $Ś_1$ $D_6$ read l. 17–18 after l. 4. —(l. 17) $Dd_1$ $Dm_1$ त्वत्तो पराः; $D_1$ $M_4$ पितामहाः; $D_4$ गुणा जनाः; $D_7$ जना जनाः (for त्वत्तो जनाः). $Ś_1$ $D_{1.3-7}$ पूर्वतराः (for पूर्वतरे). $Ś_1$ $D_{4-7}$ परे च; $Dg_1$ पुराश्च (sic); $Dt_1$ Ct द्विजाश्च; $Dd_1$ $Dm_1$ Cm जनाश्च; $D_1$ $G_1$ $Cv.r$ पराश्च; Cg as above. $M_4$ पूर्वनरेश्वराश्च. —(l. 18) $Ś_1$ $D_{4-7}$ बहूनि कर्माणि शुभानि कृत्वा. —(l. 19) $Dt_1$ Ct छित्त्वा; $D_3$ $M_4$ दृष्ट्वा; $Cv.r.m.g$ as above (for जित्वा). $Ś_1$ $D_6$ ह्यदोषं; $D_{1.3}$ तथेमं; $D_{4.7}$ सदैवं; $D_5$ सहेमं (for सदेमं). ❀ Ct: 'यदा' इति पाठे नाध्याहारापेक्षा तस्यैव यत इत्यर्थकत्वात् । ❀ $Ś_1$ $D_{4.6.7}$ परमं (for च परं). —(l. 20) $D_3$ $M_4$ प्रजाः (for द्विजाः). $Ś_1$ $D_{1.4-7}$ क($D_{4.7}$ त)स्मात्परं ना($Ś_1$ °स्त्रा)स्ति (for तस्माद्द्विजाः स्वस्ति). $Ś_1$ $D_{1.3.4.6.7}$ $T_{1.2}$ $G_{1.2}$ $M_1$ $Cv.r.m.g$ हुतं कृतं (by transp.) च; Ct as above. —(l. 21) $D_2$ अनास्तिकानां. —(l. 22) $G_1$ च न (by transp.). $T_1$ न**स्ति (damaged). $Ś_1$ $D_6$ श्रय($Ś_1$ श्रूय [sic])स्व धर्मं गुरुभिः समागतः; $D_{2.5}$ श्रेयः स(स्व)धर्मे गुरुभिः समाहितः; $D_{4.7}$ क्षमस्व धर्मं गुरुभिः समागतः. —After l. 22, $Dg_1$ $Dt_1$ $Dd_1$ $Dm_1$ S ins.:

2241(B)* समीक्ष्य कालं पुनरास्तिकोऽभवं
भवेय काले पुनरेव नास्तिकः ।

[(l. 2) $G_1$ $M_2$ भवामि; Cr.g as above (for भवेय).]

—(l. 23) $D_5$ सर्वोपि; $T_3$ स चानु (for स चापि). —(l. 24) $M_3$ नास्तिकवा***ता (damaged). $Ś_1$ $D_{2.4-7}$ यथा च तत्रा- ($D_2$ च न ना; $D_5$ वयं ना)स्तिकवाक्यमीरितं. —(l. 25) $Ś_1$ $D_{2.4.5.7}$ पार्थिवात्मज (for राम कारणात्). —(l. 26) $Ś_1$ $D_{2.4-7}$ प्रसीद संपश्य($Ś_1$ $D_6$ पश्य स्व)गुरूनिह स्थितान्.]

17 $Ś_1$ $D_{2.4-7}$ om. 17. —[a]) $B_1$ om.; Cr.m.g स तां; Ct as in text (for सतां). $M_4$ वृत्तिं (for बुद्धिं). —[b]) $Ñ_1$ B -विदर्शि($B_2$ °र्शं)नीं; $D_3$ -प्र°; $M_2$ -निदर्शनं (for -निदर्शिनीम्). —[c]) $B_2$ त्वं परिगृह्णीष्व; $Dt_1$ $M_2$ Ct स($M_2$ स्वं) त्वं निगृह्णीष्व; $G_3$ त्वमभिगृह्णीष्व. —After 17, Ñ B $D_{1.3}$ $M_4$ ins. a passage relegaled to App. I (No. 27).

Colophon. $Ñ_2$ om. —*Sarga name*: $Ś_1$ $Ñ_1$ $B_{1.2.4}$ $D_{1.3-7}$ जाबालिवाक्यं; $B_3$ जाबालिभरतवचनं; $D_2$ भरतपर्वणि जाबालिवाक्यं. —*Sarga no.* (figures, words or both): $Ś_1$ $Ñ_1$ $B_1$ $D_{3.6}$ om.; $B_2$ 102; $B_3$ $D_{2.5}$ $M_4$ 115; $B_4$ 111; $Dg_1$ $Dt_1$ $Dd_1$ $Dm_1$ T G $M_{1-3}$ 108; $D_1$ 169; $D_4$ 112; $D_7$ 114. —After colophon, $T_2$ concludes with श्रीरामचन्द्राय नमः; G with रामाय नमः.

—After Sarga 100, Ñ B $D_{1.3}$ $M_4$ read 2.98.1–13 (including star passages) constituting a separate Sarga.

# १०१

G. 2. 118. 1
B. 2. 109. 1
L. 2. 0. 0

जाबालेस्तु वचः श्रुत्वा रामः सत्यात्मनां वरः ।
उवाच परया युक्त्या स्वबुद्धया चाविपन्नया ॥ १
भवान्मे प्रियकामार्थं वचनं यदिहोक्तवान् ।
अकार्यं कार्यसंकाशमपथ्यं पथ्यसंमितम् ॥ २
निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥ ३
कुलीनमकुलीनं वा वीरं पुरुषमानिनम् ।
चारित्रमेव व्याख्याति शुचिं वा यदि वाशुचिम् ॥ ४
अनार्यस्त्वार्यसंकाशः शौचाद्धीनस्तथा शुचिः ।
लक्षण्यवदलक्षण्यो दुःशीलः शीलवानिव ॥ ५
अधर्मं धर्मवेषेण यदिमं लोकसंकरम् ।
अभिपत्स्ये शुभं हित्वा क्रियाविधिविवर्जितम् ॥ ६
कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः ।
बहु मंस्यति मां लोके दुर्वृत्तं लोकदूषणम् ॥ ७
कस्य यास्याम्यहं वृत्तं केन वा स्वर्गमाप्नुयाम् ।
अनया वर्तमानोऽहं वृत्त्या हीनप्रतिज्ञया ॥ ८

## 101

☞ V$_1$ missing up to पुरुषं in 22$^b$ on damaged fol. ( cf. v.l. 2.99.1 ). Dm$_1$ begins with ॐ; M$_{1.2}$ with श्रीरामाय नमः.

1 $^a$) B$_2$ च ( for तु ). —$^b$ ) T$_{1.2}$ M$_2$ सत्यवतां; G$_1$ आत्मवतां; Cr.m.g.t*p* as in text ( for सत्यात्मनां ). Ś$_1$ Dt$_1$ D$_{2.4-7}$ M$_3$ Ct रामः सत्यपराक्रमः; Ñ B D$_{1.3}$ M$_4$ भरतस्य च वीर्यवान्( Ñ पराक्रमः ). —$^{cd}$ ) Ś$_1$ D$_{2.4-7}$ बुद्धया; Dg$_1$ Cg भक्त्या; Dt$_1$ Dd$_1$ Dm$_1$ Ct सूक्त्या; G$_2$ M$_{1.3}$ शक्त्या ( for युक्त्या ). Dg$_1$ सुबुद्धया ( for स्वबुद्धया ). Ś$_1$ D$_{2.4-7}$ पुनः सत्याभिपन्नया; Dt$_1$ Ct बुद्धया विप्रतिपन्नया ( for $^d$ ). Ñ B D$_{1.3}$ M$_4$ उवाच रामो जाबालिं सम्यग्बुद्धयाभि( Ñ$_2$ B$_4$ °ति; B$_2$ °धि; D$_{1.3}$ M$_4$ °वि )पन्नया.

2 V$_1$ missing ( cf. v.l. 1 ). —$^{ab}$ ) Ñ B मां; D$_1$ M$_4$ मत्- ( for मे ). B$_1$ प्रियकार्यार्थं. Ś$_1$ D$_{2.4-7}$ प्रियकामस्तु( Ś$_1$ D$_6$ °मेषु ) मामेवमिदं वचनमब्रवीत् . —$^c$ ) Ś$_1$ D$_{2.5-7}$ कार्यसदृशम् ; D$_4$ सदृशं कार्यम् ( for कार्यसंकाशम् ). —$^d$ ) Ñ$_1$ Dg$_1$ Dt$_1$ पथ्यसंनिभं; Ñ$_2$ B D$_3$ M$_4$ °संज्ञितं; D$_{4.6}$ °सस्मितं; G$_1$ °संहितं; Cv.m.g as in text; Cr °संमतं ( for पथ्यसंमितम् ). D$_2$ *** पथ्यसंश्रितं.

3 V$_1$ missing ( cf. v.l. 1 ). —$^c$ ) B$_4$ om. न (subm. ). D$_2$ यस्तु ( for सत्सु ). —$^d$ ) D$_3$ om.; D$_6$ -चारिच्य- ( for -चारित्र- ). Ś$_1$ D$_6$ -सेवनात् ; Cv -दर्शनं ( for -दर्शनः ). —After 3, Dm$_1$ ins. श्रीरामसीतालक्ष्मण.

4 V$_1$ missing ( cf. v.l. 1 ). —$^b$ ) Ś$_1$ Ñ$_2$ B D$_{1.2.4-7}$ नरं; D$_3$ धीरं; T$_1$ परं; M$_4$ भीरुं ( for वीरं ). —$^c$ ) G( ed. ) चारिच्यम् . Ś$_1$ Ñ B D$_{1.2.4-7}$ ह्या( D$_{1.5}$ चा )चष्टे( B$_2$ °ष्ट ); T$_1$ चाख्याति; M$_4$ व्याचष्टे ( for व्याख्याति ). —$^d$ ) T$_3$ मतिं ( for शुचिं ). Ś$_1$ Ñ B D$_{1.2.4-7}$ G$_3$ शुभं वा यदि वाशुभं.

5 V$_1$ missing ( cf. v.l. 1 ). —$^a$ ) Ñ B Dt$_1$ Dd$_1$ D$_{1-3.5}$ T M$_3$ Ct [ आ ]र्यसंस्थानः( B$_2$ °नं; D$_3$ °नैश् ); Cv.r.m.g as in text ( for [ आ ]र्यसंकाशः ). Ś$_1$ D$_6$ अनार्यश्चात्मशीलश्च; D$_{4.7}$ अनार्य( D$_4$ अनर्थ )स्वार्यशीलश्च. —$^b$ ) Ś$_1$ D$_6$ शौ( D$_6$ शो )चहीनस् ; D$_{4.7}$ M$_3$ शौचाधीनस् ; G$_3$ शोचाद्धीनस् ; Cr.m.g as in text ( for शौचाद्धीनस् ). G$_{1.2}$ M$_1$ सदा ( for तथा ). Ñ B D$_3$ शौ( B$_{1.4}$ शो )चान्वित इवाशुचिः. —$^c$ ) Ś$_1$ Ñ B$_2$ D$_{1.2.4.5.7}$ निर्लक्षणो लक्षणवान् ; B$_{1.4}$ निर्लक्ष्मणो लक्ष्मणवान् ; B$_3$ दुर्लक्षणो लक्ष्म( before corr. °क्ष )णवान् ; D$_3$ निर्लक्षणोथ लक्षणो; D$_6$ निर्लक्षणे लक्षणं वां ( sic ); G$_{1.3}$ M$_2$ लक्षिण्यवदलक्षिण्यो ( sic ); M$_3$ लक्षस्यवदलक्षिण्यो ( sic ); M$_4$ लक्षण्य इव लक्षेण. —$^d$ ) Ś$_1$ D$_6$ दु( D$_6$ सु )शीलश् ( sic ); B$_1$ दुः**; Dm$_1$ दुःशीलं; D$_2$ अरोदुः ( sic ); D$_5$ न ** ( for दुःशीलः ). Ś$_1$ Ñ$_1$ B D$_{1.4-7}$ अपि; D$_2$ इह; G$_2$ M$_1$ इति; Cr.m.g as in text ( for इव ).

6 V$_1$ missing ( cf. v.l. 1 ). —$^a$ ) B$_{2.3}$ अधर्मान् ; M$_4$ अधर्मो ( for °र्मं ). Ś$_1$ D$_6$ धर्मलोभेन; D$_{1.2.4.5.7}$ °रूपेण ( for °वेषेण ). —$^b$ ) Ś$_1$ D$_{2.4-7}$ मलिनं; Ñ B Dt$_1$ Ct यद्यहं; D$_1$ मानितं; G$_1$ यदि मां; M$_4$ यद्येवं; Cr.m यदीदं; Cg as in text ( for यदिमं ). Ñ B D$_5$ लोकगर्हितं; T$_3$ G$_3$ °संगरं; G$_2$ °संकमं ( sic ); Cr.m.g.t as in text ( for °संकरम् ). —$^c$ ) Ś$_1$ D$_{4.6.7}$ अभिपश्येत् ; B$_{2.4}$ D$_{2.5}$ अभिपश्ये ( for °पत्स्ये ). Ś$_1$ D$_6$ विधिं हित्वा; B$_2$ क्रियां हित्वा; Dd$_1$ Dm$_1$( before corr. ) शुभं सित्वा; D$_{1.3}$ M$_4$ शुचिर्भूत्वा; D$_5$ शुभां हित्वा; Cr.m.g.t as in text ( for शुभं हित्वा ). —$^d$ ) Ñ B Dt$_1$ Dd$_1$ D$_5$ Ct क्रियां; Cr.m.g as in text ( for क्रिया- ). D$_{1.5}$ -लोक-; D$_2$ -लोप- ( for -विधि- ). Ñ$_2$ B D$_3$ -विवर्जितः; Dt$_1$ M$_4$ Ct -विवर्जितां; D$_5$ -विगर्हितां; Cr.m.g as in text ( for -विवर्जितम् ). G$_3$ क्रियाविधिषु वर्जितं.

7 V$_1$ missing ( cf. v.l. 1 ). —$^a$ ) Ñ$_2$ कश्चेतनवान् ( for कश्चेतयानः ). B$_3$ reads पुरुषः in marg. —$^b$ ) D$_2$ **कार्यविचक्षणः; D$_3$ कार्यं कार्य°; G$_1$ कुर्यात्कार्यविलक्षणः. —$^{cd}$ ) Ñ B Dt$_1$ Dd$_1$ Dm$_1$ Ct मन्येत; Cr.m.g as in text ( for मंस्यति ). Dg$_1$ मन्ये इमं ( for मंस्यति मां ). B$_3$ लोकनिवृत्तं; B$_4$ लोके निवृत्तं; D$_7$ G$_1$ लोको दुर्वृत्तं ( for लोके दुर्वृत्तं ). Ś$_1$ Ñ B$_{2-4}$ D$_{1-7}$ M$_4$ कुलपांसनं; M$_1$ कुलदूषणं; M$_3$ °दूषकं ( for °दूषणम् ). B$_1$ भिन्नचारित्रदर्शनं ( for $^d$ ).

8 V$_1$ missing ( cf. v.l. 1 ). —D$_5$ om. 8$^{ab}$. —$^a$ )

कामवृत्तस्त्वयं लोकः कृत्स्नः समुपवर्तते ।
यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः ॥ ९
सत्यमेवानृशंस्यं च राजवृत्तं सनातनम् ।
तस्मात्सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥ १०
ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे ।
सत्यवादी हि लोकेऽस्मिन्परमं गच्छति क्षयम् ॥ ११
उद्विजन्ते यथा सर्पान्नरादनृतवादिनः ।
धर्मः सत्यं परो लोके मूलं स्वर्गस्य चोच्यते ॥ १२
सत्यमेवेश्वरो लोके सत्यं पद्मा समाश्रिता ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥ १३

G. 2. 118. 11
B. 2. 109. 13
L. 2. 0. 0

G3 M2 कस्या (sic); Cr as in text (for कस्य). Dg1 Dd1 T1 Cm.g$p$ दास्यामि; G1.3 Cv.g धास्यामि; Cr.t as in text (for यास्यामि). T3 वृत्तिं; Cv.r.m.g.t as in text (for वृत्तं). M3 कस्य दास्याम्यहं दद्यां (sic). —$^{c}$) G3 damaged from तं up to वृ in $^{d}$. T1.2 G1 M2 हि (for ऽहं). —For 8, Ś1 Ñ B D1–4.6.7 M4 subst.; D5 subst. l. 2 only for $8^{cd}$ :

2242* कस्यां यास्याम्यहं नद्यां जलमुद्धृत्य पाणिना ।
मिथ्या वाक्यं पितुः कृत्वा तथा हीनः प्रतिज्ञया ।

[(l. 1) Ś1 Ñ2 कथं; D2 तस्यां (for कस्यां). Ñ1 B1.3 D1.3 पा( D3 या )स्याम् (for यास्यामि). B2 यस्यामहं. Ś1 Ñ1 D4.6.7 उद्यम्य (for उद्धृत्य). D1.2 दुर्वृत्तः कुलपांसनः; D3 धु च वा समुपेयिवान् (sic) (for the post. half). M4 कथं मिथ्या वचो दद्यां कथं स्वर्गमुपाप्नुयां. —(l. 2) M4 वचः (for वाक्यं). D2.4.7 वृत्त-; D5 वृत्ति- (for तथा). D4.7 हीनं; D5 हित्वा (for हीनः). Ś1 D6 हीनश्चैव प्रतिज्ञया; Ñ1 D3 तथा हीनप्रतिज्ञया; M4 तथा मिथ्याप्रतिज्ञतां (for the post. half).]

9 V1 missing (cf. v.l. 1). —$^{a}$) Ñ B D1.3 M4 राज (D1.3 °ज्ञा; M4 °ज्ञो )वृत्तं (for कामवृत्तस्). Ñ2 तथा; B1 D1.3 M4 सदा; Dt1 Ct [अ]न्वयं; Dd1 Dm1 G1 स्वयं (for त्वयं). Ñ1 B2–4 किल जनः (for त्वयं लोकः). Ś1 D4.6.7 राजवृत्तमिहैवैकं( D6 °कां [sic] ); D2.5 राजवृत्त( D5 °पुत्र )-मिह त्वेकं. —$^{b}$) Ś1 D2.4–6 M3 कृत्स्नं; D7 कृत्य (sic); Ct as in text (for कृत्स्नः). Ñ2 B D1.3 G2.3 M1.4 समनु( G2.3 M1 °भि )वर्तते; D2 समुपचक्रमे; Ct as in text (for समुपवर्तते). —$^{cd}$) Ñ1 सद् (for यद्). D1 om. (hapl.) from राजानस् up to सन्ति. M3 सद् (for तद्). Ś1 D4.6.7 वै प्रजाः; Ñ B D1.3 M4 मानवाः; D2.5 वै जनाः (for हि प्रजाः).

10 V1 missing (cf. v.l. 1). Ñ1 B2 om. $10^{ab}$. —$^{a}$) Ñ2 B1.3.4 D1.3 M4 चैव; D6 एवं (for एव). Ś1 D6 भृशं सारं; Ñ2 Dg1 Dt1 Dd1 Dm1 D2 T3 G1.3 M2 [आ]नृशंसं च; Cv.r.m.g.t as in text (for [आ]नृशंस्यं च). —$^{b}$) Cv.m.g.t as in text; Cr राम- (for राज-). B1 -पुत्रं (for -वृत्तं). D1.3 M4 सत्ये श्रीर्नियता ध्रुवं. —$^{c}$) M2 कस्मात्; Cr.m.g.t तस्मात् (as in text). —$^{d}$) Ś1 Ñ2 B D1–7 T3 सत्ये लोकाः( Ñ2 °कः ) प्रतिष्ठिताः( D6 °तः [sic] ). —After 10, Ñ B D1.3 M4 read $13^{cd}$ and $14^{ab}$ (transp.); all except B1 repeating them in their proper place.

11 V1 missing (cf. v.l. 1). M4 om. $11^{a}$–$12^{b}$. —$^{a}$) D1 चापि; G1.2 M1.2 च हि (for चैव). Dg1 D4.6.7 वेदाश् (for देवाश्). Ñ B ऋषयो देवताश्चैव. —$^{b}$) D3 सत्याद् (for सत्यम्). Ś1 Ñ B D2.4–7 समासते; D1.3 नमस्यते( D3 °तां ) (sic); M3 [इ]ह मेनिरे (for हि मेनिरे). —Dm1 om. $11^{cd}$. —$^{c}$) B1 [इ]ति; B3.4 त्रि-; G1 च; G2 M1 [इ]ह (for हि). Ś1 D2.5.6 सत्यवानेव; D4.7 सत्यबंधुश्च; G3 सत्यमेव हि (for °वादी हि). D3 पुरुषः (for लोकेऽस्मिन्). —$^{d}$) Ś1 D6 प्रतिगच्छति संगतिं; Ñ B D2.4.5.7 प्रेत्य( Ñ1 प्रत्या; Ñ2 D2 प्रत्य ) गच्छति सद्ग( Ñ B1 संग )तिं; Dt1 परं गच्छ च चाक्षयं (sic); D1 परमां गच्छते गतिं; D3 परमां लभते गतिं; G2 M1 परं गच्छति सोक्षयं; Cr.m.g.t as in text (for $^{d}$).

12 V1 missing (cf. v.l. 1). M4 om. $12^{ab}$ (cf. v.l. 11). Dm1 transp. 12 (reading in marg.) and $13^{ab}$. —$^{a}$) Ś1 D2.4–7 उद्विजंति; D1 उद्वंजंते (corrupt); D3 उर्द्विजंते (corrupt) (for उद्विजन्ते). —$^{b}$) Ñ B1.2 तथैवानृत (B1.2 °ति [sic] )कान्नरान्; B3.4 तथा चैवानृतान्न( B4 °श्च )-राः; D1.3 तथा चानृतकाज्जनात्( D3 °तिकाजूना [corrupt] ); M3 नराननृतवादिनः. —B1 D5 om. $12^{cd}$. —$^{c}$) Ś1 Ñ1 B2.4 Dg1 Dt1 Dd1 D4.6.7 G1 M3 Ct सत्य-; G2 M2 सत्यः (for सत्यं). Ñ2 B3 Dm1 D1.3 G3 M4 परं; Ct as in text (for परो). D2 सत्यधर्मपरो लोकः. B2 om. (hapl.) $12^{d}$–$13^{a}$. Ś1 —$^{d}$) Dt1 Dd1 M3 Ct सर्व( M3 °त्य )स्य (for स्वर्गस्य). Ñ B3.4 D1–4.6.7 G3 M4 मूलं( D2 पूर्व )धर्मस्य सत्यता.

13 V1 missing (cf. v.l. 1). B2 om. $13^{a}$ (cf. v.l. 12). Dm1 transp. 12 (reading in marg.) and $13^{ab}$. —$^{a}$) Ś1 D6 सत्ये( D6 °त्य ) D2 reads $13^{ab}$ in marg. —$^{a}$) Ś1 D6 सत्ये( D6 °त्य ) D2 reads $13^{ab}$ in marg. B3 सत्यमेव परं; B4 D1.3.5 M4 सत्यमेवेश्वरं; सर्वं स्थितं; Dd1 सत्ये (for सत्यं). Ñ B2–4 D2.4–7 सत्ये D4.7 सत्यं सर्वेश्वरं (for सत्यमेवेश्वरो). G3 सत्यमेवेश्वरस्थानं. —$^{b}$) Dd1 सत्ये (for सत्यं). Ñ B2–4 D2.4–7 सत्ये श्रीर्नियता( Ñ B2–4 D2.5 °तं ) स्थिता; B1 Dt1 Dm1 Ct सत्यं( B1 Dm1 Ct °त्ये ) धर्मः सदाश्रितः; D1.3 M4 राज( D1.3 °जा )वृत्तं सनातनं; G3 सत्यं ब्रह्मा सदाश्रितः; M3 (after corr. as in text) सत्यं पद्मा श्रिता तदा; Ct$p$ सत्ये पद्मा प्रतिष्ठिता. —After $13^{ab}$, Ś1 D2.4–7 read 14 ($^{ab}$ and $^{cd}$ transp.). —Ñ B2–4 D1.3 M4 repeat $13^{c}$–$14^{b}$ here; B1 reads $13^{cd}$ and $14^{ab}$ (transp.) after 10 (for all cf. v.l. 10). —$^{c}$) D3 (first time) om. सर्वाणि. —$^{d}$) M2 द्यांति (sic) (for नास्ति). Ñ1 B2( both second time ).3.4 (both both times) [अ]परं (for परं). Ñ1 (second time) वरं; Ñ2 B4 (both second time) धनं; Ñ B

G. 2. 118. 11
B. 2. 109. 14
L. 2. 0. 0

दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च ।
वेदाः सत्यप्रतिष्ठानास्तस्मात्सत्यपरो भवेत् ॥ १४
एकः पालयते लोकमेकः पालयते कुलम् ।
मज्जत्येको हि निरय एकः स्वर्गे महीयते ॥ १५
सोऽहं पितुर्निदेशं तु किमर्थं नानुपालये ।
सत्यप्रतिश्रवः सत्यं सत्येन समयीकृतः ॥ १६
नैव लोभान्न मोहाद्वा न चाज्ञानात्तमोन्वितः ।
सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः ॥ १७
असत्यसंधस्य सतश्चलस्यास्थिरचेतसः ।
नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम् ॥ १८
प्रत्यगात्मभिमं धर्मं सत्यं पश्याम्यहं स्वयम् ।
भारः सत्पुरुषाचीर्णस्तदर्थमभिनन्द्यते ॥ १९
क्षात्रं धर्ममहं त्यक्ष्ये ह्यधर्मं धर्मसंहितम् ।
क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥ २०

---

D1–5.7 G3 M4 ( Ñ B2–4 D1.3 M4 first time ) तपः; B2 ( second time ) परं; B3 ( second time ) बलं ( for पदम् ). Ś1 D6 ह्येतानि मुनिसत्तम; D1.3 M4 ( all second time ) सत्यमेषां ( M4 °व ) परायणं.

**14** V1 missing ( cf. v.l. 1 ). Ñ B2–4 D1.3 M4 repeat 14$^{ab}$ here, B1 reads 14$^{ab}$ after 10 ( cf. v.l. 10 ); Ś1 D2.4–7 read 14 ( $^{ab}$ and $^{cd}$ transp. ) after 13$^{ab}$ ( cf. v.l. 13 ). —$^{a}$ ) D5 च तप्तं च; M4 ( first time ) अधीतं च ( for हुतं चैव ). —$^{b}$ ) Ñ B2–4 ( all second time ) व्रतानि च; G1 M4 ( second time ) प्र( M4 सु )तप्तानि ( for तप्तानि च ). Ś1 Ñ B D2–7 ( Ñ B2–4 D3 first time ) तपो ( D5 हुतं )यज्ञा( D6 °ज्ञ )श्च केवलाः( D2 °लः ); D1 M4 ( both first time ) तपो यज्ञश्च केवलः. —$^{c}$ ) Ś1 Dg1 D2.4–7 देवाः; Ñ B2–4 सर्वं; B1 धर्मः; Ct as in text ( for वेदाः ). Ñ B D7 M3 -प्रतिष्ठानं( D7 °नाः; M3 °नां ); D4 -प्रतिष्ठांतास् ( for -प्रतिष्ठानास् ). M4 वेदाः सत्ये प्रतिष्ठंते. —$^{d}$ ) G2 M1 सत्यं परं ( for सत्यपरो ). Ś1 Ñ1 D3.4.6.7 भव ( for भवेत् ).

**15** V1 missing ( cf. v.l. 1 ). —$^{a}$ ) Ś1 Ñ2 B D1–4.6.7 M2 पाव( B1.2[ after corr. ].3.4 °र; D3 °त )यते; Ñ1 पापयरो ( corrupt ) ( for पालयते ). Ś1 Ñ B D4.6.7 लोकान् ( for °कम् ). —$^{b}$ ) Ś1 Ñ1 D1–7 M2 पावयते; B2 पारयते ( for पाल° ). —$^{c}$ ) Ś1 Ñ ( Ñ2 marg. ) B D4.6.7 [ ऽ ]थ; D2 T1 [ ऽ ]पि ( for हि ). Ś1 Ñ B Dg1 D2.3.5–7 न( D5 नि [ sic ] )रके; D4 *रक ( for निरय ). —$^{d}$ ) Ś1 D2.4.6.7 प्रमोदते( D2.7 °ति ); D5 च मोदते; T2 ( after corr. *sec. m.* as in text ) महीपते ( for महीयते ).

**16** V1 missing ( cf. v.l. 1 ). —$^{a}$ ) Ś1 Dg1 D2.4–7 निदेशं तं( Dg1 च ); Ñ1 सत्यत तु ( sic ); B नियोगं तं ( for निदेशं तु ). Ñ2 M4 सोहं पितृनियोगं तं( M4 °गेन ); D1.3 सोहं तं पितृर्निदेशं. —$^{b}$ ) D1 वा ( for न ). Ś1 D2.4–7 कथमुत्स्रष्टुमुत्सहे. —D4 om. 16$^{cd}$. —$^{c}$ ) B3 Dg1 G1 सत्ये( Dg1 °त्यः; G1 °त्यं ); Cr.m.g.t as in text ( for सत्य- ). D5 -प्रतिश्रवं ( for °वः ). Ñ2 B1.3 सत्यः ( for सत्यं ). D1.3 सत्यप्रतिश्रवेणेह; M4 सत्यप्रतिग्रहेणैव. —$^{d}$ ) Dt1 Ct -कृतं ( for -कृतः ). Ś1 Ñ B D2.5–7 सत्येनास्मि वशीकृतः; D1.3 सत्येन समयः कृतः; M4 सत्येन समयं कृतं.

**17** V1 missing ( cf. v.l. 1 ). —$^{a}$ ) Ś1 Ñ1 D2.4–7 न वै( D2.5.6 नैव ) मोहान् ( for न मोहाद्वा ). —$^{b}$ ) Dg1 तमोवृतः; Cg °न्वितः ( as in text ). Ś1 Ñ B D1–7 M4 नाप्य ( D2.5 न प्र )ज्ञानसमन्वितः; Dm1 न चाज्ञानां( sic ) तमोन्वितः; T2 नैवाज्ञानात्तमोन्वितः; T3 M3 न ह्यज्ञानात्तु मो( M3 °त्तमा )हितः. —$^{c}$ ) D5 च सत्यं ( for सत्यस्य ). D1 सत्याभिस्यत्स्यामि ( corrupt ) ( for सत्यस्य भेत्स्यामि ). —$^{d}$ ) Ś1 Ñ B1.3.4 D2.4–7 गुरुं सत्य( B3 °त्ये )प्रतिश्रवं( Ñ1 °श्रवः; D5 °श्रुतं ); B2 गुरुं सत्यश्रवं कुरु.

**18** V1 missing ( cf. v.l. 1 ). —$^{a}$ ) G2 M1 -संधानः; Cv.r.m.g.t as in text ( for -संधस्य ). B2 [ अ ]सतश्; B3 ततश्; D3 सत्यश् ( for सतश् ). Ś1 D2.4.6.7 असत्ययश ( D2 °वच )सः पुंसश्; D5 असत्यस्य सतः पुंसश्; M4 ह्यसत्यसत्यस्य सतश्. —$^{b}$ ) G2 M1 चलान् ( sic ) ( for चलस्य ). Ś1 D6 -[ अ ]स्थित- ( for -[ अ ]स्थिर- ). —$^{c}$ ) D6 देवः ( sic ) ( for देवा ). —$^{d}$ ) Cr.m.g.t नः ( as in text ). Ś1 Ñ B D2.4–7 प्रीयंत इति( B3 °व ) नः श्रुतं; D1.3 प्रतिगृह्णंति नः श्रुतं; M4 प्रतिगृह्णंति वाशितं.

**19** V1 missing ( cf. v.l. 1 ). Ś1 D2.4–7 om. 19–20. Ñ B D1.3 M4 transp. 19 and 20. —$^{a}$ ) G1 इदं; Cg.t as in text ( for इमं ). Ñ1 B2–4 प्रत्यग्रधर्मरूपं हि; Ñ2 समग्रमेवं धर्मं हि; B1 प्रत्यक्षमेव धर्मं हि; D1.3 प्रत्यगात्मनिकं धर्मं; M4 प्रत्यगात्मानमुद्धर्तुं. —$^{b}$ ) Dt1 Dd1 Dm1 Ct ध्रुवं; Cr.m.g as in text ( for स्वयम् ). —After 19$^{ab}$, B2–4 ins. :

2243* चेतः सुकृतिनां यत्र रघूणां रमते सदा ।

—Ñ1 illeg. for 19$^{cd}$. —$^{c}$ ) Ñ2 B2 D1.3 M4 भावः( B2 °राः ); M3 मार्गः ( for भारः ). B2–4 सत्यपथाचीर्णस्; Dt1 M1 Ct सत्पुरुषैश्चीर्णस्; Cv तत्पुरुषाचीर्णस्; Cr.m.g as in text ( for सत्पुरुषा° ). —$^{d}$ ) D1 स स्वर्गम् ( for तदर्थम् ). B2–4 D1 M4 ह्यभिनंदति; Dg1 T3 G2.3 M1.3 Cr.g °नन्यते; Cv.m.t as in text ( for °नन्द्यते ). D3 तत्स्वर्गमभिनंदति.

**20** V1 missing ( cf. v.l. 1 ). Ś1 D2.4–7 om. 20 ( cf. v.l. 19 ). Ñ B D1.3 M4 transp. 19 and 20. —$^{a}$ ) T3 क्षात्रधर्मम्. Ñ B D1.3 M4 त्यक्ष्ये धर्ममहं( M4 °मिमं ) क्षात्रं ( by transp. ). —$^{b}$ ) Ñ B D1.3 M4 अधर्मं ( with hiatus ) ( for ह्य° ). B2 सत्य- ( for धर्म- ). Ñ1 B1.2.4 -संज्ञितं; Ñ2 -संमितं; G1 -संश्रितः; Cr.m.g.t as in text

कायेन कुरुते पापं मनसा संप्रधार्य च ।
अनृतं जिह्वया चाह त्रिविधं कर्म पातकम् ॥ २१
भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि ।
स्वर्गस्थं चानुबध्नन्ति सत्यमेव भजेत तत् ॥ २२
श्रेष्ठं ह्यनार्यमेव स्याद्यद्भवानवधार्य माम् ।
आह युक्तिकरैर्वाक्यैरिदं भद्रं कुरुष्व ह ॥ २३

कथं ह्यहं प्रतिज्ञाय वनवासमिमं गुरोः ।
भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥ २४
स्थिरा मया प्रतिज्ञाता प्रतिज्ञा गुरुसंनिधौ ।
प्रहृष्टमानसा देवी कैकेयी चाभवत्तदा ॥ २५
वनवासं वसन्नेवं शुचिर्नियतभोजनः ।
मूलैः पुष्पैः फलैः पुण्यैः पितॄन्देवांश्च तर्पयन् ॥ २६

G. 2. 118. 26
B. 2. 109. 26
L. 2. 0. 0

(for -संहितम्). —$^c$) T3 क्षुद्रं (for क्षुद्रैर्). —$^d$) B4 सेवितुं; M4 स धृतः (for सेवितं). D3 पापवत्सेभिः.

21 V1 missing (cf. v.l. 1). —$^a$) B2 कार्यते (for कायेन). —$^b$) Dg1 Dt1 Dd1 Dm1 M2 Ct तत् (for च). Ś1 D4.6.7 T3 संप्रधारयन्; Ñ B G2 M1.4 संप्रधार्यते (Ñ1 B3.4 °र्य यः); G1 M3 संप्रसार्यते (G1 °र्य च); Cr संप्रसाध्यते (for संप्रधार्य च). —$^c$) Ñ B वाचा (Ñ2 °च्यं); Dg1 G1.2 M1.4 चाहं (sic); D2.4.7 सत्या; D5 सत्यात्; T2 G3 वक्ति; M3 (before corr. as in text) चाहुस्; Ct as in text (for चाह). Ś1 D6 अनंतं पालयेत्सत्यं. —$^d$) Ś1 D3.7 विहितं; D2.5 विशते (for त्रिविधं). Ś1 D2.4–7 T3 पावकं (sic); Dm1 D1 T1 G2.3 M1.2 पापकं (G3 °जं); Ct as in text (for पातकम्). G1 M3 त्रिविधं पापकर्मकं; M4 विवृतं कर्म यावकः.

22 V1 missing up to पुरुषं in $^b$ (cf. v.l. 1). —$^a$) Ś1 B4 D4–7 लोके कीर्तिं यथा (Ś1 D6 तथा; B4 D5 यशो) लक्ष्मीं; Ñ1 B1–3 D1–3 M4 भूतिं कीर्तिं यशो लक्ष्मीं. —$^b$) Ś1 Ñ B D1–7 M4 पुरुषाः (Ś1 D2.4–7 °षाः) (for पुरुषं). Ñ B D1.3 M4 प्रार्थयन्ति (B1 °न्ति) ह; V1 D2.5 प्राप्नुवंति हि (for प्रार्थयन्ति हि). —Dm1 reads 22$^{cd}$ twice. —$^c$) T1 स्वर्गस्था (sic) (for स्वर्गस्थं). Dg1 Dm1 (first time) T1.2 M2 Cr.g अ (Dm1 T1.2 चा) नुपश्यंति; T3 G1 M1.3 अनु (G1 चापि) बध्नंति (for चानु°). Dt1 Dd1 Dm1 (second time) Ct सत्यं समनुवर्तते. —$^d$) Dm1 (first time) सत्यमेवं (for °मेव). Dt1 Dd1 M3 Ct भजेत्ततः; T1 भजेत चेत्; T2 भवेत तत् (sic); G1.2 M1 भवेत यः; G3 भवेदथ (for भजेत तत्). —For 22$^{cd}$, Ś1 Ñ V1 B D1–7 M4 subst.:

2244* स्वर्गार्थमनुबन्धं च सत्यमेव वदेत्सदा ।

[ M4 स्वर्गस्थम् (for स्वर्गार्थम्). Ś1 D2.5.6 अनुरुध्यंते (D2.5 °तः); B1 °रुद्धश्च; B2 °रुध्यश्च; B4 °बंधश्च; D4.7 अवरुध्यंते (for °बन्धं च). V1 स्वर्गानुबद्धं बद्धयंते (for the prior half). D1 सत्यमेकं (for °मेव). Ś1 V1 D2.4–7 स्वर्गमेव (V1 °ति) व्रजंति ते (Ś1 D4.6 च; V1 हि) (for the post. half).]

—Thereafter B4 reads 25$^{ab}$ for the first time, repeating it in its proper place.

23 $^a$) D1.3 M4 कार्यमेतत्स्याद्; G1 [अ]नन्यमेवं स्याद् (for [अ]नार्यमेव स्याद्). —$^b$) D1.3 भगवन् (for यद्भवान्). Dm1 D3 अवधार्यतां; M4 अवलम्ब्य माम्; Cm as in text (for अवधार्य माम्). —$^c$) D1.3 युक्तिकृतैर्वाक्यैर्; M4 युक्ततरं वाक्यम्. —$^d$) M4 भद्र. D1.3 करोत्विति; M4 कुरुष्व च. —For 23, Ś1 Ñ V1 B D2.4–7 subst.:

2245* अश्रेयोऽनार्यमेतद्धि यन्मां बोधितवानसि ।
अस्वर्ग्यमहितैर्वाक्यैस्त्वमिदं भद्र कुर्विति ।

[(l. 1) Ś1 V1 D2.4–7 श्रेयो (V1 प्रियो; D2.5 मूलं) ह्येतदका (D4.7 °न) र्याणां (for the prior half). Ś1 V1 D4–7 यद्वचोस्या (D4.6.7 °या) वधार्यते; Ñ2 B1 यत्व (B1 °द्व) दस्यवधार्य मां (sic); D2 यद्वयस्यावधार्य वै (sic) (for the post. half). —(l. 2) Ś1 Ñ D4–7 अस्वर्ग्यैर् (Ñ1 °र्गन्; Ñ2 °र्गै); B3 असत्य- (for अस्वर्ग्यम्). B3 सहितैर् (for अहितैर्). D2 सत्येन रहितैर्. D4 वाक्ये (for वाक्यैस्). B2 त्वयीदं (for त्वमिदं). Ñ2 B2.4 तत्र (for भद्र). Ś1 क्रूरं त्वमभिभाषसे; D2.5 कुरुष्वेति च भाषसे; D4.7 कुतश्चेदिति (D7 °श्चैतिव) भाषसे [sic]; D6 क्रूरं त्वामभिशासमे (sic) (for the post. half). V1 अधर्मार्थस्यरहितैर्वाक्यैश्चेवानुभूयते (sic).]

—After 23, Dm1 ins. श्रीराम.

24 $^a$) B2.4 ह्यग्रे; B3 गुह्ये (for ह्यहं). B3 प्रतिष्ठाय (for °ज्ञाय). —$^b$) B3 वनं वासम्. Ñ1 इह; Ñ2 V1 B1.4 G3 इदं (for इमं). T1.2 गुरौ. —D6 om. 24$^c$–25$^b$. —$^c$) V1 पुरो; B2 वाचा (for वचो). V1 वचस्तस्य गमिष्यामि. —$^d$)

25 B4 repeats 25$^{ab}$ here (cf. v.l. 2244*). D6 om. 25$^{ab}$ (cf. v.l. 24). —$^a$) Ś1 V1 D2.4.5.7 मया यदा प्रतिज्ञाता; Ñ1 B2–4 यदा स्थिरा (B2.4 °ता) मयाकारी (B2–4 °या) चापि; B3 reads यदा and चापि in marg.). —$^b$) Ś1 ह्यप्रतो गुरोः; Ñ V1 B D1–5.7 M4 पितु (B3 प्रति) रग्रतः (Ñ1 °जः) (for गुरुसंनिधौ). —$^c$) Ś1 Ñ2 V1 D2.4–7 प्रहृष्टवदना; D3 प्रहृष्टा मनसा; T2 प्रहृष्यमाणा सा; T3 M2.3 °मनसा (for प्रहृष्टमानसा). —$^d$) Ś1 V1 D2.4–7 हि (for च). B2 भवेत् (for [अ]भवत्).

26 $^a$) V1 D5 वनवासे; B2 वने वासं; D1.3 M4 वसन्नहं (for वनवासं). Ś1 Ñ V1 B D2.4–7 वसेयं वै (Ñ1 च; V1 B D2.5 तु); Dg1 Dt1 Dd1 Dm1 T1.3 Ñ2 हि; G1.3 M2 वसन्नेव; D1.3 M4 वने वासं (for वसन्नेवं). —$^b$) Ñ B M4 -मानसः (for -भोजनः). —$^c$) Ñ1 B Dg1 Dt1 Dm1 मू (B4 फ) लपुष्प-; Dd1 पत्रपुष्प-; D1.3 M4 पुष्पमूल- (for मूलैः पुष्पैः). Ñ1 -फल- (for फलैः). Ś1 Ñ2 V1 B D1.3 वन्यैः (V1 D2.4–7 चैव; Ñ1 -दर्भैः (sic);

G. 2. 118. 27
B. 2. 109. 27
L. 2. 0. 0

संतुष्टपश्ववर्गोऽहं लोकयात्रां प्रवर्तये ।
अकुहः श्रद्धानः सन्कार्याकार्यविचक्षणः ॥ २७

कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम् ।
अग्निर्वायुश्च सोमश्च कर्मणां फलभागिनः ॥ २८

शतं क्रतूनामाहृत्य देवराड् त्रिदिवं गतः ।
तपांस्युग्राणि चास्थाय दिवं याता महर्षयः ॥ २९

सत्यं च धर्मं च पराक्रमं च
भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ३०

धर्मे रताः सत्पुरुषैः समेता-
स्तेजस्विनो दानगुणप्रधानाः ।
अहिंसका वीतमलाश्च लोके
भवन्ति पूज्या मुनयः प्रधानाः ॥ ३१

इति श्रीरामायणे अयोध्याकाण्डे एकाधिकशततमः सर्गः ॥ १०१ ॥

---

वापि; B4 रम्यैः; D3 वनै [ sic ] ) ( for पुण्यैः ). —d ) V1 D7 T3 G1.3 पितृ- ( for पितॄन् ). B1 तु ( for च ).

27 a ) Ś1 D4.6.7 प्रहृ( D4.7 °न )ष्ट-; Ñ B D2 अन ( D2 °नि )ष्ट-; D3 संतुष्टः; D5 अनिष्टः ( for संतुष्ट- ). B1 om. ऽहं ( subm. ). Ś1 Ñ D2.4–7 -वर्गो हि; B3 -यज्ञोहं; B4 T3 M4 -वर्गोयं; D1.3 -वर्गेण ( for -वर्गोऽहं ). V1 अनिष्टपंचवर्गा हि. —b ) B1 om. लोक-. Ś1 Ñ2 B2.4 D2–7 लोकयात्रा- ( for °यात्रां ). Ś1 Ñ B D2.4.7 प्रवर्तकः; Dg1 Dt1 Ct प्रवाहये; Dm1 D1.3 M2.4 प्र( M4 अ )वर्तयन्( M2 °येत् ); Cm as in text ( for प्रवर्तये ). V1 लोके यात्राः प्रकीर्तिताः. —c ) Ś1 V1 D4–6 अद्रोहः; Ñ B अक्षुद्रः; Dg1 अकूहः; D1.3 M4 अक्रुद्धः; Cv अन्वूहः; Cr.m.g.t as in text ( for अकुहः ). Ñ B G3 साव( G3 श्रीर्द )धानश्; D7 श्रद्धीनाश् (sic) ( for श्रद्धानः ). Ś1 Ñ V1 B D1.3.7 च ( for सन् ). D2 अद्रोहश्च दधानश्च. —D3 om.( hapl. ? ) $27^{d}$–$28^{c}$. —d ) B2–4 D1 M4 कार्याकार्ये ( for कार्याकार्य- ). Ś1 V1 D2.4–7 -विशारदः; Ñ1 B2–4 विचार्य च; Ñ2 -विचार्यन् ( sic ); D1 विचारयन्; M4 विधाय च ( for -विचक्षणः ). B1 कार्याकार्यं विचार्य च.

28 D3 om. $28^{abc}$ ( cf. v.l. 27 ). Dg1 reads कर्मभूमिमि in marg. —a ) T2 इहं ( sic ) ( for इमां ). —b ) V1 D5 प्रकुर्यात्( D5 °र्यां ); D1 M4 करिष्ये ( for कर्तव्यं ). —c ) Ś1 V1 D2.4–7 सूर्यश् ( for सोमश् ). —d ) Ś1 V1 D2.4–7 कर्मभिर्; Ñ1 B D1.3 M4 कर्मणः( D3 °णा ) ( for °णां ). Ś1 D6 महिता( D6 °तां )स्तु ते; Ñ B D1.3 M4 फलमश्नुते; V1 D2.4.5.7 महदश्नुते; Dm1 °भोजनः; T1 G3 °भोगिनः; Cv.r.m.g.t as in text ( for फलभागिनः ).

29 a ) D5 शतक्रतून्समाहृत्य. —b ) Ś1 Ñ V1 B D4.6.7 देवराजो दिवं गतः. —c ) Ñ1 तपां ह्यग्राणि. Ś1 D6 चादाय; D3 संस्थाप्य ( for चास्थाय ). —d ) Ś1 V1 D2.5.6 सिद्धाः; D4.7 दिशः ( for दिवं ). Ś1 V1 D2.4–7 सर्वे; Ñ1 Dt1 M4 प्राप्ता; B4 यात्रा ( sic ) ( for याता ). —After 29, V1 ins. :

2246* धर्मे रताः सत्यचराः सत्यतेजस्विनो वने ।
सत्यप्रधाना हि गुणप्रधाना.

—Thereafter V1 reads $31^{c}$ and $31^{d}$ transp., repeating them in their proper places. —After 29, Dg1 Dt1 Dd1 Dm1 S ins. l. 1–4; and D1.3 ins. l. 17–20 of 2241*.

30 Ś1 Ñ B D1–7 transp. 30 and 31. —a ) Ś1 D2.4–7 च दानं; V1 वदान्यं; D1 च धर्मः ( for च धर्मं ). Ś1 V1 D1.2.4.6.7 पराक्रमश् ( for °मं ). —b ) Ś1 Ñ1 Dt1 D1–7 प्रियवादिता( Ñ1 °तं; D1 °ताश् ) ( for °वादितां ). —After $30^{c}$, V1 ins. :

2247* विप्रेषु दानं विनयप्रधानम् ।

—d ) B4 पंथा यम् ( for पन्थानम् ). V1 D2.4.5.7 विप्राः; D6 om. ( for सन्तः ). —After 30, Ñ B ins. :

2248* पितामहाः पूर्वतराश्च सर्वे
शुभानि कर्माणि बहूनि कृत्वा ।
जित्वा तपोभिः परमं च लोकं
गताः प्रजानां च हितानि कृत्वा ।

[ ( l. 1 ) Ñ1 च ** ; B1 च तेषां; B2–4 वराश्च ( for च सर्वे ). —( l. 2 ) B4 कार्याणि ( for कर्माणि ). —( l. 3 ) Ñ2 द्विजा ( sic ) ( for जित्वा ). —( l. 4 ) B2 पतिः ( sic ) ( for गताः ). ] —while Dg1 Dt1 Dd1 Dm1 S ins. l. 5–20 of 2241* after 30.

31 Ś1 Ñ B D1–7 transp. 30 and 31; V1 om. $31^{ab}$. —a ) M4 सत्पुरुषाः ( for °षैः ). D1.3 उपेतास्; M3 सतोस्ते ( sic ) ( for समेतास् ). Ś1 D2.4–7 सत्यपरास्तु संतस् ( for सत्पुरुषैः समेतास् ). —b ) D1.3 M4 तपस्विनः ( for तेजस्विनो ).

# १०२

क्रुद्धमाज्ञाय रामं तु वसिष्ठः प्रत्युवाच ह ।
जाबालिरपि जानीते लोकस्यास्य गतागतिम् ।
निवर्तयितुकामस्तु त्वामेतद्वाक्यमब्रवीत् ॥ १

इमां लोकसमुत्पत्तिं लोकनाथ निबोध मे ।
सर्वं सलिलमेवासीत्पृथिवी यत्र निर्मिता ।
ततः समभवद्ब्रह्मा स्वयंभूर्दैवतैः सह ॥ २

स वराहस्ततो भूत्वा प्रोज्जहार वसुंधराम् ।
असृजच्च जगत्सर्वं सह पुत्रैः कृतात्मभिः ॥ ३

आकाशप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥ ४

विवस्वान्कश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः ।
स तु प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ ५

G. 2. 119. 6
B. 2. 110. 6
L. 2. 123. 6

D1 M4 सत्य-; D2 चेद-; D3 स्वत्व-; D5 वाद- (sic) (for दान-). B4 -गुणैः (for -गुण-). Ś1 D4.6.7 [s]थात्मगुरु- (for दानगुण-). —V1 repeats $31^{cd}$ here (cf. v.l. 2246*). —$^{c}$) Ñ2 अहिंसया (for °का). Ñ2 V1 B4 D3 वीतमना(V1 °तमाः; B4 °सदाः; D3 °तया)श्च; M3 वीरतमाश्च (for वीतमलाश्च). —$^{d}$) V1 भवंतु. D1.3 M4 पुण्या (for पूज्या). Ñ2 B M4 प्रजानां (for प्रधानाः). Ś1 D6 सुखेन तीर्णा भवसागरं ते.—After 31, Dg1 Dt1 Dd1 Dm1 S ins.:

2249* इति ब्रुवन्तं वचनं सदोषं
　　रामं महात्मानमदीनसत्त्वम् ।
उवाच पथ्यं पुनरास्तिकं च
　　सत्यं वचः सानुनयं च विप्रः ।

[(l. 3) Cr.g तथ्यं; Ct पथ्यं (as above).]

—Thereafter all the above MSS. cont. l. 21–26 of 2241*.

Colophon.—*Sarga name*: Ś1 Ñ1 D1.3.4.6.7 राम (D3 श्रीराम)वाक्यं(D4 °क्ये [sic]); Ñ2 B सत्यप्रशंसा; V1 भरतप्रशंसा; D2 भरतपर्वणि सत्यप्रशंसा; D5 सत्यप्रतिज्ञा. —*Sarga no.* (figures, words or both): Ś1 Ñ1 B1.2 D3.6 om.; Ñ2 B3 117; V1 112; B4 D4 113; Dg1 Dt1 Dd1 Dm1 S 109; D1 169; D2.5 116; D7 115.—After colophon, T2 concludes with श्रीरामचन्द्राय नमः; G with श्रीरामाय नमः.

## 102

Dm1 begins with ॐ; M1.2 with श्रीरामाय नमः.

1 $^{a}$) Ñ B D1.3 M4 रामस्य वचनं श्रुत्वा.—$^{b}$) Ś1 D2.6 प्रत्यभाषत.—$^{c}$) Ś1 अभि-; V1 एवं; Dt1 इति; D5 परि-; G3 अथ (for अपि). Ś1 Ñ2 B D1–7 M4 जानाति.—$^{d}$) V1 विश्वस्य (for लोकस्य). Ś1 Ñ1 V1 B3.4 Dg1 D2.4.5.7 T2 [अ]स्य गतागतं; D3 [अ]प्यगता°; M4 [अ]स्य भवाभवं; Cr.g.t as in text (for [अ]स्य गतागतिम्).—$^{e}$) Ś1 V1 D2.4–7 त्वाम्; B3 च (for तु).—$^{f}$) M4 राम त्वां (for त्वामेतद्). Ñ2 B1 T उक्तवान् (for अब्रवीत्). Ś1 V1 D2.4–7 एतद्वाक्यमथाब्रवीद्; Ñ1 B2–4 D1.3 त्वामेवं (D1.3 °मिदं) वाक्य(B2.4 सत्य)मुक्तवान्.

2 $^{a}$) M4 तस्माल् (for इमां). D2 लोके (for लोक-). —$^{b}$) M4 शृणुष्व (for निबोध).—After $2^{ab}$, Dm1 ins. राम श्री.—$^{c}$) Ś1 D4.6.7 पूर्वं; D1.3 तमो (for सर्वं). D1.3 M4 निखिलम् (for सलिलम्).—$^{d}$) Ñ B D1.3 वसुधा; Dg1 reads in m.; D6 पृथिव्या (for पृथिवी). Ñ1 B येन; Dg1 Dt1 Dd1 Cm.t तत्र.—After $2^{cd}$, B3 ins.:

2250* तत्सर्वं कथयिष्यामि शृणुष्व मम तत्त्वतः ।;

whereas D1.3 ins.:

2251* एकार्णवं तदासीच्च नष्टस्थावरजङ्गमम् ।

[D1 तदा ज्ञात्वा नष्टं (for तदासीच्च नष्ट-).]

—$^{e}$) Dg1 तस्मात् (for ततः). V1 स भगवान्; D3 समुद्भवद् (for समभवद्).—B4 om. (hapl.) $2^{f}$–$4^{a}$.—$^{f}$) Ś1 D2.4–7 वरदः समः(Ś1 D6 प्रभुः); Ñ B1–3 विष्णुरव्ययः; V1 सनातनश्च; D1 M1.2.4 दे(M4 after corr. *sec. m.* as in text)वतैः सह (for दैवतैः सह).

3 B4 om. 3 (cf. v.l. 2).—$^{a}$) Ś1 V1 D2.4–7 विष्णुर्वराहरूपेण; Ñ B1–3 D1.3 स वराहोथ(D1.3 तथा वराहो) भूत्वेमाम्; M4 वराहरूपो भूत्वेमाम्.—$^{b}$) Ś1 Ñ V1 B1–3 भूत्वेमाम्; M4 उज्जहार(Ś1 V1 D2.4.5.7 with hiatus); D6 D1–5.7 M4 उज्जहार(Ś1 V1 D2.4.5.7 with hiatus); D6 तज्जहार.—$^{c}$) D1.6 स (for च). D1 M4 कृत्स्नं (for सर्वं). —$^{d}$) V1 D2.5 महात्मभिः; Dg1 चराचरं (for कृतात्मभिः). Ś1 D4.6.7 पुत्रैः सह महर्षिभिः; Ñ B1–3 D1.3 M4 सचराचरमव्ययं(Ñ2 °व्ययः; B2.3 D3 M4 °क्षयं).

4 For 4–28, cf. 1.69.17–30 and 1.1274*. B4 om. $4^{a}$ (cf. v.l. 2).—$^{a}$) D7 ब्रह्म.—$^{b}$) D6 शाश्वतं. Ś1 D4.6.7 [s]था(Ś1 D6 वा)क्षयोव्ययः; Ñ B D2.5 नित्यमव्ययः; V1 नित्यमक्षयः; D1.3 ब्रह्म चाव्ययं (for नित्य अव्ययः).—$^{d}$) D5 मरीचात् (for मरीचेः). D6 काश्यपः.

5 D3 om. (hapl.) 5.—$^{a}$) T G M1.2 काश्यपाज्. —$^{b}$) Dg1 ततः; Dt1 स्वयं; K(ed.)सुतः (for स्मृतः). —T3 om. $5^{cd}$.—$^{c}$) T1.2 मनुः (for स तु). G1 पूर्वं. —$^{d}$) T2 इक्ष्वाकोस्य (sic) (for इक्ष्वाकुस्तु).—For 5, Ś1 D4–7 subst.:

G. 2. 119. 7
B. 2. 110. 7
L. 2. 123. 7

यस्येयं प्रथमं दत्ता समृद्धा मनुना मही ।
तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ॥ ६
इक्ष्वाकोस्तु सुतः श्रीमान्कुक्षिरेवेति विश्रुतः ।
कुक्षेरथात्मजो वीरो विकुक्षिरुदपद्यत ॥ ७
विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ।
बाणस्य तु महाबाहुरनरण्यो महायशाः ॥ ८
नानावृष्टिर्बभूवास्मिन्न दुर्भिक्षं सतां वरे ।
अनरण्ये महाराजे तस्करो वापि कश्चन ॥ ९
अनरण्यान्महाबाहुः पृथू राजा बभूव ह ।
तस्मात्पृथोर्महाराजस्त्रिशङ्कुरुदपद्यत ।
स सत्यवचनाद्वीरः सशरीरो दिवं गतः ॥ १०
त्रिशङ्कोरभवत्सूनुर्धुन्धुमारो महायशाः ।
धुन्धुमारान्महातेजा युवनाश्वो व्यजायत ॥ ११

---

2252* ससर्जाङ्गिरसं ब्रह्मा प्रचेतसमथाङ्गिराः ।
मनुः प्रचेतसः पुत्रः इक्ष्वाकुस्तु मनोः सुतः ।

[ D6 reads l. 1 in marg. —(l. 1) D4.6.7 प्राचेतसम् (for प्र°). —D5 reads l. 2 in marg. ];
while Ñ V1 B D1.3 M4 subst. for 5 :

2253* ततः पर्यायसर्गेण विवस्वानसृजन्मनुम् ।
मनोर्दशसु पुत्रेषु इक्ष्वाकुर्धर्मतो वरः ।

[ (l. 1) D1.3 एवं (for ततः). Ñ2 B2 D1.3 -मार्गेण; V1 -शब्देन (for सर्गे°). —(l. 2) Note hiatus between the two halves. ]

6 ᵃᵇ) D2.5 M4 तस्येयं. Ś1 D2.3.6 प्रथमा; G3 पृथिवी (for प्रथमं). Ś1 D6 वृत्ता (for दत्ता). Dg1 transp. प्रथमं and मनुना. —ᶜ) Ś1 D3 स इक्ष्वाकुर् (for तमिक्ष्वाकुम्). —ᵈ) Ś1 D6 राजाभूद् (for राजानं). Ś1 V1 D1–3.6.7 विधि-; G3 विप्र- (for विद्धि). Ñ B D1.5.7 पूर्वजं (Ñ2 D4.7 °तः).

7 ᵃ) Ñ V1 B अथ पुत्रोभूत् ; D1.3 M4 अभवत्पुत्रः (for तु सुतः श्रीमान्).

☞ In V1, the portion after इत्य in ᵇ (see variants) up to 2.103.18 is lost on missing fol. —ᵇ) Ś1 V1 D1.3.6 इत्यभि-; Ñ B Dt1 Dd1 Dm1 M4 इत्येव; L(ed.) इत्यति- (for एवेति). Ñ1 B G2 M2 नः श्रुतं; D1.3 -शब्दितः; T2 M3 नः श्रुतः; M1 विश्रुतं. —ᶜ) Ś1 D4.6 अपि (for अथ). Ś1 Dt1 Dd1 Dm1 D5 T2 वीरः; M3 श्रीमान् (for वीरो). Ñ B D1.3 M4 कुक्षित(B1 °ज)स्तु महाराजो(D1.3 M4 °भागो). —ᵈ) Ś1 D4.6.7 समपद्यत; Dg1 D1 उपपद्यत; D2.5 सत्यसंगरः. —After 7, B4 reads erroneously 10ᵉᶠ, repeating it in its proper place.

8 D6 erroneously repeats 8ᵃᵇ after 9ᵃᵇ. —ᵃ) D1 विकुक्षितो. —ᵇ) T2.3 बाण- (for बाणः). Ñ B वेणुः(Ñ2 B2.3 रेणुः) पुत्रो व्य(B2 °भ्य)जायत; D1.3 M4 वेणू राजा (D3 विष्णुराजो) व्यजायत. —ᶜ) Dt1 Dd1 Dm1 T M1 च (for तु). G3 **बाहुर् (damaged). —ᵈ) Dt1 Dd1 Dm1 महातपाः (for °यशाः). —For 8ᶜᵈ, Ś1 D2.4–7 subst. :

2254* अनरण्यस्तु पुत्रोऽभूद्बाणस्यामिततेजसः ।;
while Ñ B D1.3 M4 subst. :

2255* वेणोः पुत्रोऽथ पुष्पाच्च अनरण्यो व्यजायत ।

[ Note hiatus between the two halves. Ñ2 B2.3 रेणोः. B1 D1.3 M4 पुष्योथ पुष्याच्च; B2.4 पुत्रो(B2 °ष्पो)थ पुष्पातु (B4 °श्च). D1.3 [अ]प्यनरण्यो (to avoid hiatus) (for अन°). B2 [ऽ]भ्यजायत. ]

9 B2.4 om. 9ᵃᵇ. —ᵃ) Dd1 Dm1 G2.3 M1 अना (Dm1 न चा)वृष्टिर् ; D4.7 नानाभूतिर् . Ś1 D2–7 अभूत्तस्मिन् (for बभूवा°). Ñ2 B1.3 D1 M4 नाना(M4 नैव)वृष्टिभयं तस्मिन् . —ᵇ) Dg1 Dt1 Dm1 Ct न दुर्भिक्षः; D1 G2 M1 दुर्भिक्षं वा(D1 च). Ś1 D2.4–7 कथंचन; Ñ1 B1.3 सतां वरः D1.3 कुतोनृजुः(D1 °जुं); Ct as in text (for सतां वरे). —After 9ᵃᵇ, D6 repeats 8ᵃᵇ. —ᶜ) Ś1 Ñ B D1–7 M1 महाभागे(D6 °गस [sic]) (for °राजे). —ᵈ) Ś1 D6 वै न; Dm1 M2 चा न; D2.4.5.7 नैव; G1 [ऽ]पि न (for वापि). Ñ B D1.3 M4 बभूवुर्नापि तस्कराः.

10 ᵃ) Ś1 Dd1 D2.4–7 M3 महातेजाः; Ñ1 B1.4 Dg1 Dt1 M2 °राज; Ñ2 B2.3 Dm1 G1.2 M1 °राजः; T3 G3 °राजात् (for °बाहुः). —ᵇ) Ś1 D6 पुत्रः पृथुरजायत; Ñ B पृथुर्नाम व्यजायत; D1.3 M4 पृथू राजा व्यजायत; D2.4.5.7 पृथुः समुपजायत. —ᶜ) Ñ B D1.3 M4 पृथोरपि (for तस्मात्पृथोर्). Ś1 D6 महाभागात् ; Dt1 Dd1 Dm1 D1.3 M4 °तेजास् ; D3 °प्राज्ञस् ; D5 °वीर्यस् (for °राजस्). —ᵈ) D3 त्रिशंकुर् (for °शङ्कुर्). Dg1 Dd1 D1.2.7 उपपद्यत. —B4 reads erroneously 10ᵉᶠ after 7, repeating it here. —ᵉ) G3 राजा; L(ed.) धीरः (for वीरः). Ñ1 B2–4 D1.3 M4 स सत्यवाक्यत्राणेन; Ñ2 स सत्यवाक्प्रतापेन; B1 स सत्यवाक्प्र(G[ed.] °क्रमा)णिहितः.

11 ᵃ) Dg1 T3 G M1.2 त्व(G1 *)भवत् (for अभवत्). D2 पुत्रो (for सूनुर्). Ñ B D1.3 M4 त्रिशंकुतो महाराजो (D1[ before corr. ].3 M4 °तेजा). —ᵇ) B1 धंधुमारो; D3.4 हरिश्चंद्रो; T2 G3 दुंदु(G3 °धु)मारो. Ñ B D1.3 M4 व्यजायत; D2 प्रतापवान् (for महायशाः). —After 11ᵃᵇ, D2 ins. :

2256* हरिश्चन्द्राद्रोहिताश्वस्तस्मात्सर्वगुणान्वितः ।;
while D4 ins. :

2257* हरिश्चन्द्राद्रोहितोऽभूद्धरितो रोहितादभूत् ।
हरिताद्धुन्धुमारश्च महाबलपराक्रमः ।

एते चाप्यभिषेकार्द्रा मुनयः फलशोधनाः ।
सहिता उपवर्तन्ते सलिलाप्लुतवल्कलाः ॥ ५
ऋषीणामग्निहोत्रेषु हुतेषु विधिपूर्वकम् ।
कपोताङ्गारुणो धूमो दृश्यते पवनोद्धतः ॥ ६
अल्पपर्णा हि तरवो घनीभूताः समन्ततः ।
विप्रकृष्टेऽपि ये देशे न प्रकाशन्ति वै दिशः ॥ ७
रजनीचरसत्त्वानि प्रचरन्ति समन्ततः ।
तपोवनमृगा ह्येते वेदितीर्थेषु शेरते ॥ ८
संप्रवृत्ता निशा सीते नक्षत्रसमलंकृता ।
ज्योत्स्नाप्रावरणश्चन्द्रो दृश्यतेऽभ्युदितोऽम्बरे ॥ ९
गम्यतामनुजानामि रामस्यानुचरी भव ।
कथयन्त्या हि मधुरं त्वयाहं परितोषिता ॥ १०
अलंकुरु च तावत्त्वं प्रत्यक्षं मम मैथिलि ।
प्रीतिं जनय मे वत्से दिव्यालंकारशोभिनी ॥ ११

G. 3. 5. 12
B. 2. 119. 11
L. 3. 3. 33

पतिकीर्णानाम् ; D2 प्रतिभ्रांतानाम् ; D5 M4 प्रविकी( D5 °ची )-र्णानाम् ( for प्रतिकीर्णानाम् ). Dg1 दिवं संप्रतिकीर्णानाम्; D6 दिवि संविप्रकीर्णानाम् . —$^{b}$ ) Ś1 Ñ V1 B1-3 D2.4.6 M4 च( M4 हि ) मैथिलि; D5 च भामिनि ( for पतत्रिणाम् ). —$^{c}$ ) Dd1 Dm1 विलीनानां ( for निली° ). —For $4^{cd}$, Ś1 Ñ V1 B1-3 D2.4-6 M4 subst. :

2412* समागतानां नीडेषु श्रूयते पक्षिणां स्वनः ।

[ V1 नीलेषु; B1 D5 तीर्थेषु; B2 नीतेषु ( sic ) ( for नीडेषु ). V1 पक्षिणा. Ś1 Ñ2 D6 पक्षिणां श्रूयते ( by transp. ). B1 श्रूयते पक्षिनिस्वनः ( for the post. half ). ]

5 $^{a}$ ) Ś1 B1 D2.4-6 ते; Ñ1 Dd1 Dm1 वै; M3 हि ( for च ). Ñ1 ह्यभिषेकार्द्रा; Dd1 Dm1 ह्यभिषेकाय; G3 ह्यभिषेकार्थं; M3 चाभिषेकार्द्रा ( for [ अ ]प्यभिषेकार्द्रा ). Ñ2 V1 B2.3( m. ) गत्वा सरोभि( B3 [ before corr. ] रामस्य )षेकार्थम् . —$^{b}$ ) Dg1 Dt1 Dd1 Dm1 G2 Cv.r.m.g.t कलशोद्य( G2 °द्दि )ताः ( for फलशोधनाः ). Ś1 Ñ V1 B1-3 D2.4-6 विप्राः( Ñ2 V1 B2.3 अमी ) कलशपाणयः. —$^{c}$ ) Ś1 B1 D2.4.6 चापवर्तंते; Dg1 उपसर्पंति ( for उपवर्तन्ते ). Ñ2 V1 B2.3 मुनयो हि( Ñ2 [ S ]सि; G[ ed. ] वि ) निवर्तंते; T3 सहितावेव वर्तंते.

6 $^{a}$ ) G3 अग्निकल्पेषु ( for °होत्रेषु ). Ś1 Ñ V1 B1-3 D2.4-6 अग्निहोत्रेष्वृ( V1 °त्रे ऋ; D4 °त्रे ह[ sic ] )षीणां च ( B2 तु ); Dt1 M3 अग्निहोत्रे च ऋषिणा; M4 अग्निहोत्रेषु चर्षीणां. —$^{b}$ ) Ñ Dt1 Dm1 G1 हुते च ( for °षु ). D6 [ अ ]विधिपूर्वकं. —$^{d}$ ) Ñ2 V1 B2.3 विमलां( V1 °लें )बरे; Dd1 Dm1 D2.5 पवनोत्थि( D2.5 °द्धु )तः ( for पवनोद्धतः ). —After 6, Dm1 ins. रामसीता.

7 V1 repeats $7^{ab}$ after 9. —$^{a}$ ) B1 D4 G1 Cr अल्पवर्णा; G3 अल्पपूर्णा; Cv.m.g.t अल्पपर्णा ( as in text ). Ñ2 V1 ( both times ) B2.3 च ( for हि ). Ñ1 D4.5 [ अ ]पि नगा; B1 [ अ ]सिनगा; D2 [ अ ]पि भगा( for तरवो ). Ś1 D6 अन्यवर्णा अपि नगा. —$^{b}$ ) Ś1 B1 D4.6 नीलीभूताः ( for घनीभूताः ). —Ś1 D2.6 om. ( hapl. ) $7^{c}$–$8^{b}$. —$^{c}$ ) Dt1 Ct विप्रकृष्टेद्रिये; T1.2 विप्रकृष्टेन वै; G2 M1 विप्रकृष्टेपि या; Cv.r.g as in text ( for विप्रकृष्टेऽपि ये ). T3 G3 M2 विप्रकृष्टेपि( T3 °ष्टे हि ) देशेस्मिन् . —$^{d}$ ) M4 ते तथा ( for वै दिशः ).

8 Ś1 Dg1 D2.6 M4 om. $8^{ab}$ ( for Ś1 D2.6, cf. v.l. 7 ). —$^{a}$ ) G M1.3 रजनीचराणि सत्त्वानि ( hypm. ). ❀ Cv : रजनीचरसत्त्वानीति सम्यक् पाठः । ❀ —For $7^{c}$–$8^{b}$, Ñ V1 B1-3 D4.5 subst. :

2413* विप्रकर्षाच्च देशस्य दृश्यन्ते मेघसंनिभाः ।
रजनीचारिणश्चापि प्रवर्तन्ते समन्ततः ।

[ ( l. 1 ) B1 चित्रवर्णाच्च ( for विप्रकर्षाच्च ). Ñ1 घन- ( for मेघ- ). Ñ2 V1 B2.3 विप्रकीर्णे शुभे देशे प्रकाशंते यथा नगाः. —( l. 2 ) Ñ2 V1 B2.3 निशाचराणि सत्त्वानि( V1 भूतानि ) ( for the prior half ). Ñ1 प्रचरंते; V1 प्रचरंति; B2.3 प्रचलंते ( for प्रवर्तन्ते ). ]

—$^{c}$ ) B1.3 D4.5 तपोवने; G3 ततो वन- ( for तपोवन- ). Ś1 D5.6 चापि; Ñ1 D2.4 चैव; Ñ2 B2.3 चेमे; V1 चैते; B1 ह्येव ( for ह्येते ). —$^{d}$ ) Ś1 वेदिधर्मेषु; Ñ1 B1 D2.4-6 M4 वेदीदर्भेषु; Ñ2 V1 वेदीमध्येषु; B2 वेदीमध्ये तु; B3 वेदिमध्ये च ( for वेदितीर्थेषु ).

9 $^{a}$ ) Ñ2 V1 B2.3 D2 तत्प्रवृत्ता ( for संप्रवृत्ता ). —$^{b}$ ) Ñ2 B2.3 नक्षत्रगण( G[ ed. ] °ग्रह )मंडिता; V1 नक्षत्रगण-मान्तथा ( sic ). —$^{c}$ ) B1 -प्रचारणश्च; T2 -प्रवरणश्च ( for -प्रावरणश्च ). Ñ2 B2.3 चंदुर् ( for चन्द्रो ). —$^{d}$ ) Ś1 D6 द्योतितों( D6 °तं )बरे; Ñ2 V1 B2.3 विमलां( V1 B2.3 °लें )बरे; B1 D2.5 G1 ह्युदितोंबरे; Dg1 T2.3 [ S ]भ्युदितेंबरे; Dd1 [ S ]भ्युदितां° ( for ऽभ्युदितोऽम्बरे ). —After 9, V1 repeats $7^{ab}$.

10 $^{a}$ ) Ñ2 V1 B2.3 अनुजाने त्वां; B1 अमुना वत्स ( for अनुजानामि ). —$^{b}$ ) Ś1 Ñ1 B1 D2.4-6 M4 [ अ ]नंतरा; Dg1 [ अ ]नुचरा; Cg.t as in text ( for [ अ ]नुचरी ). G3 damaged for चरी भव. Ñ2 V1 B2.3 पार्श्वे रामस्य मैथिलि. —$^{c}$ ) B1 [ अ ]सि; D5 [ अ ]ति-; M3 [ अ ]भि- ( for हि ). —$^{d}$ ) Ś1 Ñ1 D2.4-6 [ अ ]स्मि ( for [ अ ]हं ). Ñ2 B2.3 साधु( B2.3 °ध्वि ) तोषिता; Dt1 Dd1 Dm1 अपि तोषिता ( for परितोषिता ).

11 $^{a}$ ) Ś1 B1.3 अलंकुरुष्व. —$^{cd}$ ) D5 च जनयामास ( for जनय मे वत्से ). G M1 सर्वालंकार- ( for दिव्या° ). Ś1 Ñ1 B1 D2.4-6 -भूषिता; Dg1 Dt1 Dd1 G2 M1 -शोभिनि; K( ed. ) -शोभिता ( for -शोभिनी ). Ñ2 V1 B2.3 निर्वृताहं ( V1 निर्वृता हि ) भविष्यामि दृष्ट्वा त्वां समलंकृतां.

G. 3. 5. 13
B. 2. 119. 12
L. 3. 3. 34

सा तदा समलंकृत्य सीता सुरसुतोपमा ।
प्रणम्य शिरसा तस्यै रामं त्वभिमुखी ययौ ॥ १२
तथा तु भूषितां सीतां ददर्श वदतां वरः ।
राघवः प्रीतिदानेन तपस्विन्या जहर्ष च ॥ १३
न्यवेदयत्ततः सर्वं सीता रामाय मैथिली ।
प्रीतिदानं तपस्विन्या वसनाभरणस्रजाम् ॥ १४
प्रहृष्टस्त्वभवद्रामो लक्ष्मणश्च महारथः ।
मैथिल्याः सत्क्रियां दृष्ट्वा मानुषेषु सुदुर्लभाम् ॥ १५
ततस्तां शर्वरीं प्रीतः पुण्यां शशिनिभाननः ।
अर्चितस्तापसैः सिद्धैरुवास रघुनन्दनः ॥ १६
तस्यां रात्र्यां व्यतीतायामभिषिच्य हुताग्निकान् ।
आपृच्छेतां नरव्याघ्रौ तापसान्वनगोचरान् ॥ १७
तावूचुस्ते वनचरास्तापसा धर्मचारिणः ।
वनस्य तस्य संचारं राक्षसैः समभिप्लुतम् ॥ १८

---

12 $^{a}$) Ś1 Ñ1 B1 D2.4-6 M4 सा ततः; Ñ2 B2.3 Dd1 Dm1 ततः(Dd1 Dm1 °त्र) सा; K(ed.) सा तथा (for सा तदा). V1 ततः सांगमलंकृत्य; G(ed.) ततः स्वयमलंकृत्य. —$^{c}$) Dt1 पादौ; M4 तस्या (for तस्यै). —$^{d}$) M2 रामस्य (for रामं तु). Dg1 Dm1 T M4 [अ]भिमुखा (for °मुखी). —For 12$^{cd}$, Ś1 Ñ V1 B1-3 D2.4-6 subst.:

2414* अभिवाद्यर्षिपत्नीं तां राममभ्याजगाम ह ।

[Ñ2 V1 B1 [अ]नुसूयां; B2.3 [अ]नसूयां (for [ऋ]षिपत्नीं). Ś1 रामपार्श्वं जगाम ह; Ñ2 V1 B1-3 ययौ राघवमीक्षितुं (for the post. half).]

13 $^{a}$) Ñ2 V1 B1-3 तां तथा; Dg1 तथा तां; G2 M1 तदा तु (for तथा तु). Dd1 Dm1 विभूषितां (for तु भूषितां). Dm1 reads सीतां in marg. G1 तथाभूतां तु तां सीतां; M3 तथा तु भूतां सीतां तां. —$^{b}$) B1 उवाच (for ददर्श). G M1-3 ददतां (for वदतां). —$^{c}$) B3 राघवं (sic). Ñ2 V1 B1.3 M4 प्रीतिदायेन (for °दानेन). —$^{d}$) Ñ2 V1 B1-3 [अ]नु(B2.3 [अ]न)सूयया (for जहर्ष च). —For 13, Ś1 Ñ1 D2.4-6 subst.:

2415* दिव्याभरणसंयुक्तां वसानां पीतमम्बरम् ।
राघवः प्रेक्ष्य वैदेहीमनसूयामपूजयत् ।

[(l. 1) Ś1 D4.6 -संयुक्ता; Ñ1 -युक्तां तां (for -संयुक्तां). Ś1 D4.6 वसाना. —(l. 2) D2.4 अनुसूयाम्.]

14 $^{a}$) Cm.g.t न्यवेदयत् (as in text). Ś1 Dd1 Dm1 D2.4-6 T2 न्य(D2 नि)वेदयत तत्सर्वं; Ñ2 V1 B1-3 निवेदयामास तदा(V1 B3 च सा). —$^{b}$) Ś1 Ñ2 D4.6 रामस्य (for रामाय). Ś1 D2.4-6 विस्तरं(D2 °रात्); Ñ1 विपुरं(sic); Ñ2 V1 B2.3 तत्त्वतः; B1 तद्वचः (for मैथिली). —$^{c}$) Ś1 Ñ1 D2.4-6 प्रसादं च(D2.4.5 वै); Ñ2 B1-3 प्रीतिदायं; V1 प्रतिदायं; T2 प्रतिदानं; M4 प्रदानं तत् (for प्रीतिदानं). —$^{d}$) D6 वसाना (for वसन-). Ś1 Ñ1 D2.4.6 -स्रजः; Dg1 Dd1 D5 M2.3 Cr.m.g -स्रजं; Cr$p$.m$p$.g$p$ as in text (for -स्रजाम्). Ñ2 V1 B1-3 अं(B1 [अ]र्घं)गरागं(Ñ2 °ग) सु(Ñ2 B3 स; V1 च)भूषणं.

15 $^{a}$) Ñ2 V1 B1-3 प्रहृष्टोथ (for °ष्टस्तु). —$^{b}$) Ś1 Ñ2 V1 B1-3 D4-6 महायशाः; Ñ1 M2 °बलः (for °रथः). —$^{c}$) B1.2 मैथिल्या; D4 मैथिल्यां; D5 मैथिली- (for मैथिल्याः). M4 सत्कृतं (for सत्क्रियां). Ñ2 B1-3 लब्धां (for दृष्ट्वा). —$^{d}$) Ś1 Ñ1 D2.4-6 मानुषैस्तां (for °षेषु). Dg1 T3 [अ]तिदुर्लभां; M4 °र्लभं (for सुदुर्लभाम्). Ñ2 V1 B1-3 दृष्ट्वा(V1 लब्धां) स्त्रीभिः सुदुर्लभां; T2 मानुषीषु सुदुर्लभं.

16 $^{a}$) Dg1 तु; Dt1 स (for तां). D2.5 यामिनीं (for शर्वरीं). Ś1 Ñ1 D2.4-6 पुण्यां; Dm1 प्रीतिः; G3 दृष्ट्वा (for प्रीतः). —$^{b}$) Dt1 Dd1 शशिनिभाननां. Ś1 Ñ1 D2.4-6 M4 प्रीतः(M4 पुण्यां) शशिविराजितां. —$^{cd}$) Ś1 Ñ1 Dt1 D2.4-6 सर्वैर् (for सिद्धैर्). Dg1 अवसद्; D4 तदा स; D6 उवाच (for उवास). G3 सि* **स (damaged). —For 16, Ñ2 V1 B1-3 subst.:

2416* ततस्तां शर्वरीं पुण्यां प्रियया सह राघवः ।
उवास परमप्रीतस्तस्मिन्मुनिवराश्रमे ।

17 $^{a}$) G1.3 प्रभातायाम् (for व्यती°). Ñ1 उषितस्तायमे सार्धं (sic). —$^{b}$) G2 M1 अभिवाद्य; Cr.g अभिषिच्य (as in text). Ñ1 हुताग्निभिः; T1 हुताग्निकाः; Cr.g as in text (for °ग्निकान्). Ś1 D2.4-6 अभिषिक्ता हुताग्नयः. —$^{c}$) Ś1 D2.4.6 आ(D4.6 अ)पृच्छंत; Ñ1 D5 अ(D5 आ)पृच्छत्स; M1 °च्छ्यैतान् (for °च्छेतां). Ś1 Ñ1 D2.4-6 ततः सर्वे(Ñ1 सार्धं; D2.5 साम्ना); M2 शरव्याघ्रौ (for नरव्याघ्रौ). —$^{d}$) Ś1 Ñ1 D2.4-6 ते(Ś1 D4 तं; Ñ1 D5 तान्) मनीषिणः; M4 गमनैषिणौ (for वनगोचरान्). —After 17, Dm1 ins. रामाय नमः। सीतायै नमः। लक्ष्मणाय नमः।

18 Ñ1 om. (hapl.?) 18$^{ab}$. —$^{a}$) T2 नरवरास् (for वनचरास्). Ś1 D2.4-6 ऊचुस्ते वचनं(Ś1 D6 सकलं) रा(Ś1 का)मं. —$^{b}$) Ś1 D2.4.6 G3 वनचारिणः; D5 वनवासिनः (for धर्मचारिणः). —$^{c}$) D2 नवस्य (meta.). Ś1 D4.6 [अ]स्य च (for तस्य). —$^{d}$) Ś1 Ñ1 D2.4-6 समभिद्रुतं (for °भिप्लुतम्). —For 17-18, Ñ2 V1 B1-3 subst.; while Dg1 Dt1 Dd1 Dm1 D2 S ins. l. 3-6 after 18:

2417* तस्यां रात्र्यां व्यतीतायामुपापृच्छति राघवे ।
हुताग्निहोत्रो भगवान्राममत्रिरभाषत ।
रक्षांसि पुरुषादानि नानारूपाणि राघव ।
वसन्त्यस्मिन्महारण्ये व्यालाश्च रुधिराशनाः ।
उच्छिष्टं वा प्रमत्तं वा तापसं धर्मचारिणम् । [5]
अदन्त्यस्मिन्महारण्ये तान्निवारय राघव ।

एष पन्था महर्षीणां फलान्याहरतां वने ।
अनेन तु वनं दुर्गं गन्तुं राघव ते क्षमम् ॥ १९

इतीव तैः प्राञ्जलिभिस्तपस्विभि-
द्विजैः कृतस्वस्त्ययनः परंतपः ।
वनं सभार्यः प्रविवेश राघवः
सलक्ष्मणः सूर्य इवाभ्रमण्डलम् ॥ २०

G. 3. 5. 23
B. 2. 119. 22
L. 3. 3. 41

इति श्रीरामायणे अयोध्याकाण्डे एकादशाधिकशततमः सर्गः ॥ १११ ॥

॥ समाप्तमयोध्याकाण्डम् ॥

[(l. 1) B2 उपागच्छति (for °पृच्छति). B1 मुदा पृच्छति राघवः (for the post. half). —(l. 2) B2 हुत्वा (for हुत-). —D2 om. l. 3. —For lines 3–6, cf. 2343*, 2344* and 2345*. —(l. 5) Dt1 ब्रह्मचारिणं; M2 वनचारिणं (for धर्म°). —(l. 6) D2 M4 हिंसंति; M3 अर्चंति (for अदन्ति). D2 तानि त्वं बोद्धुमर्हसि (for the post. half). Ñ2 V1 B1–3 हिंसंति राक्षसा राम (B1 °सास्तूर्णं) तांस्त्वं रोद्धु (Ñ2 B2 बोद्धु) मिहार्हसि. ]

19 Ś1 D4–6 om. 19 here and Ś1 D4.6 read it after 2.108. 2343* and D5 after 2345* (cf. v.l. 2343* and 2345*). B1 D2 repeat 19 (cf. v.l. 2.108.10). —[a]) G1 एवं (for एष). —[b]) B1.2 D2.4–6 वनात् (for वने). —[c]) B2 अन्येन (for अनेन). Ñ2 V1 B1–3 त्वं; D5 हि; T1 तं (for तु). V1 Dt1 वने दुर्गं; M3 वरं दुर्गं. —[d]) G1 अर्हसि (for राघव). M3 क्षणं; Cr.m.t as in text (for क्षमम्). Ñ2 V1 B1–3 इतोन्यद्गंतुमर्हसि; D2 पंथानं गंतुमर्हसि. —After 19, Ñ2 V1 B1–3 ins.:

2418* स्वादुमूलफलं तात तस्मिन्मुनिवराश्रमे ।
शिवेन नो याहि यथेप्सितं वनं
सुखं निवासाय नरेश्वरात्मज ।
पुनर्निवृत्तं कृतकृत्यमाश्रमा-
दिहैव पश्येम भवन्तमागतम् । [5]

[Ñ2 V1 om. l. 1. —(l. 1) B1 किं तु (for स्वादु-). B2 ऋषिवराश्रमे (for मुनि°). —(l. 2) B3 (m. as above) वै (for नो). Ñ2 सतां समीप्सितं; V1 समीप्सितं वनं (for यथेप्सितं वनं). —(l. 3) V1 निवेशाय (for निवासाय). B2 जनेश्वरात्मज. ]

20 [a]) Ś1 Ñ1 D5.6 अतीव तैः; V1 B1 Dt1 Ct इतीरितः (V1 B1 °तैः); D4 अथो स तैः; Cv.r.m.g as in text (for इतीव तैः). Ñ2 V1 B1–3 महात्मभिर् (for तपस्वि°). —[b]) B1 D4 T2 G3 Cv -स्वस्त्ययनं; Dg1 -स्वस्त्ययनैः; Cr.m.g.t as in text (for °यनः). —[c]) V1 एवं; M4 वसन् (for वनं). —[d]) V1 Dt1 [अ]भ्रमंडले.

Colophon. —*Kāṇḍa name*: Ś1 B3 D5.6 आरण्य°; Ñ1 B2 आ (Ñ1 अ) रण्यक°; Ñ2 V1 B1 D2.4 आरण्यके. —*Sarga name*: Ś1 Ñ1 D2.6 अभ्यनुज्ञा (Ñ1 °नुज्ञानो); Ñ2 B3 वनप्रवेशः; V1 B2 दंडकारण्यप्रवेशः; D5 अनुज्ञा. —*Sarga no.* (figures, words or both): Ś1 Ñ1 B1 D6 om.; Ñ2 V1 B2.3 5; Dm1 T G M1.3 119; D2 6; D4 4; D5 7; M2 120; M4 129. —After colophon, Dm1 ins.:

श्रीरघुनाथार्पणमस्तु । शुभं भवतु । श्रीरस्तु ।

—T1 ins.:

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रस्वामिने नमः । शुभमस्तु ।

—T2 ins.:

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्राय नमः । अलमेलुमंगासमेतश्रीवेङ्कटाचलपती सहायम् ।

—G1 ins.:

श्रीरामचन्द्रपरब्रह्मणे नमः । हरि ॐ शुभमस्तु । सीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रस्वामिने नमः ।

—G2 ins.:

श्रीरामचन्द्राय नमोनमः । अयोध्याकाण्डं संपूर्णम् ।

हरिः ॐ । शुभमस्तु । द्वितीयकाण्डे ग्रन्थसंख्या मान्यभावा इति अयोध्याकाण्डग्रन्थसंख्या 4415 श्लोके ।

—G3 ins.:

श्रीमते रामानुजाय नमः । हरिः ॐ शुभमस्तु । श्रीगुरुभ्यो नमः ।

—M1 ins.:

श्रीरामचन्द्राय नमः । अयोध्याकाण्डं संपूर्णम् । ग्रन्थसंख्या द्वितीये तु काण्डे मान्यभावा स्मृता । अयोध्याकाण्डे ग्रन्थसंख्या । कोल्लं ? आमत मेडमासं चोव्वाचयुं, रोहणीयुं पूर्वपक्षत्ततृतीययुं, कूडियदिवसं कण्णनूरे शंकरन् एलुतित्तीर्तपुस्तकं; कात्र्र मनेक्कले वाल्मिकिरामायणं । अयोध्याकाण्डं । कोदण्डःसशर ।

—M2 ins.:

श्रीरामाय नमः । अयोध्याकाण्डं समाप्तम् ।

—M3 ins.:

अक्षरं यत्परिभ्रष्टं मात्राहीनं तु यद्भवेत् ।
क्षन्तुमर्हन्ति विद्वांसः कस्य नास्ति व्यतिक्रमः ।

—M4 ins.:

श्रीरामाय नमः ।

बिन्दुसल्लिपिविचित्रवीचिका-
भृङ्गभङ्गपदहीनदूषणम् ।
हस्तवेगजमबुद्धिपूर्वकं
क्षन्तुमर्हति समीक्ष्य सज्जनः ।

नारायणाय नमः ।

# APPENDIX I

This Appendix comprises 31 additional passages found in some of the 29 MSS. which have been cited in the foot-notes to the constituted text. They are either too big or unimportant to be included in the foot-notes below the text.

The order of the MSS. and the principles adopted in writing the foot-notes to these passages are the same as those of the foot-notes to the constituted text.

## 1

After 7*, $Ñ_2$ $B_{1.2}$ $D_6$ $M_3$ ins. :

अमात्यैर्बलमुख्यैश्च रथैश्च बहुभिर्युतम् ।
पादातेन प्रयुक्तेन बलेन महता वृतम् ।
सोऽभिवाद्य महात्मानं पितरं देववर्चसम् ।
कृताञ्जलिरुवाचेदमनुज्ञा दीयतामिति ।
तं पिता मूर्ध्न्युपाघ्राय परिष्वज्य च पीडितम् । [5]
सिंहखेलगतिं वाक्यमुवाच जनसंसदि ।
गच्छ सौम्य शिवेन त्वं मातामहगृहं प्रति ।
संदेशं शृणु मे वत्स तं च कुर्याः समाहितः ।
इतो मातामहकुलं शत्रुघ्नसहितो व्रज ।
शत्रुघ्नो ह्यनुरक्तस्त्वां भक्तिमांश्चाप्यनुव्रतः । [10]
तवापि च प्रियतरः प्राणेभ्योऽपि परंतप ।
आत्मवत्स त्वया भ्राता द्रष्टव्यो रक्ष्य एव च ।
गुणपाशशतैर्बद्धस्त्वया हृदि परंतप ।
न जहाति यथा पुत्र शत्रुघ्नस्त्वां तथा कुरु ।
यथा प्रकृतयः सर्वा गुणैस्त्वां रघुनन्दन । [15]
अनुरज्यन्त्यशेषेण सर्वथा त्वं तथा कुरु ।
मातुलश्चाप्ययं पुत्र शुश्रूष्योऽहमिव त्वया ।
आर्यकं चापि मन्येथाः पूज्यं दैवतवत्सदा ।
विनीतः शीलवांश्चैव भवेः पुत्रानहंकृतः ।
ब्राह्मणाञ्श्रुतवृत्ताढ्यान्सेवेथाश्च प्रयत्नवान् । [20]
प्रसाद्य चैतान्यत्नेन पृच्छेस्त्वं हितमात्मनः ।
तच्चाप्यमृतवद्ग्राह्यं त्वया तेषां हितं वचः ।
ब्राह्मणा हि महात्मानः श्रियो मूलं भवस्य च ।
स्युश्च ते सर्वकार्येषु ब्राह्मणा ब्रह्मवादिनः ।
देवाः पुत्र भवार्थं हि प्रजानां विबुधोत्तमैः । [25]
प्रेषिता मानुषं लोकं भूमिदेवा द्विजातयः ।
तेषां सकाशाद्वेदांश्च धर्मशास्त्रं तथाव्ययम् ।
नीतिशास्त्रं च विपुलं धनुर्वेदं च धारय ।
अश्वपृष्ठे रथे नागे व्यायामं कुरु नित्यदाः ।
गान्धर्वस्य च विज्ञाने युक्तो भवितुमर्हसि । [30]
अन्येष्वपि च शिल्पेषु यत्नः कार्यः सदा त्वया ।
नानाशिल्पकलाज्ञश्च भवेरपि परंतप ।
क्षणमप्यासितं तात वृथैव न हितं तव ।
कुशलावेदिनो दूता नित्यं प्रेष्याश्च ते मम ।
ह्लादितं हि मनो मे स्यात्कुशलश्रवणात्तव । [35]
एवमुक्त्वा स नृपतिर्भरतं साश्रुलोचनः ।
बाष्पगद्गदया वाचा गच्छ पुत्रेत्यभाषत ।

## 1

$D_6$ om. (hapl.?) l. 2.—(l. 2) $B_2$ सुयुक्तेन; $M_3$ च यत्तेन (for प्रयुक्तेन).—(l. 3) $B_2$ देवदर्शनं.—(l. 4) $M_3$ [इ]ति विनीतवत् (for दीयतामिति).—(l. 6) $D_6$ सिंहापेलगतो. $M_3$ स्नेहयुक्तं तदा वाक्यमिदं भरतमब्रवीत्.—(l. 7) $M_3$ -गृहानितः (for -गृहं प्रति).—(l. 8) $M_3$ तु निबोधेमं (for शृणु मे वत्स). $D_6$ तच् (for तं). $M_3$ यत्ते कार्योप्रमादिना (for the post. half).—(l. 9) $M_3$ -गृहं (for -कुलं).—(l. 10) $M_3$ [ऽ]पि (for हि).—(l. 11) $M_3$ तथा (for तव). $D_6$ तव चापि (by transp.). $M_3$ प्राणैरपि तव ह्यसौ (for the post. half).—(l. 12) $D_6$ आत्मेव (for आत्मवत्). $M_3$ भ्रात्रा.—(l. 13) $D_6$ -पाशैर्दृढैर् (for -पाशशतैर्).—(l. 14) $D_6$ त्वं (for त्वां).—$B_1$ om. (hapl.) l. 15–16.—(l. 15) $Ñ_2$ $D_6$ तथा (for यथा). $M_3$ च त्वां (for सर्वा). $Ñ_2$ $D_6$ गुणैस्ते; $M_3$ गुणौघै (for गुणैस्त्वां).—(l. 17) $M_3$ ते (for [अ]यं). $Ñ_2$ [ऽ]हमिह.—(l. 19) $Ñ_2$ $D_6$ भव (for भवेः). $Ñ_2$ पुत्रो (for पुत्र).—(l. 20) $B_1$ श्रुतवित्ताढ्यान्; $D_6$ °वृत्तांस्त्वं; $M_3$ च प्रयत्नाढ्यः (for श्रुतवृत्ताढ्यान्). $M_3$ त्वं प्रयतः (for च प्रयत्नवान्).—(l. 21) $D_6$ [ए]वं सततं; $M_3$ [ए]तान्य° (for [ए]तान्यत्नेन). $Ñ_2$ पृच्छ त्वं; $M_3$ पृच्छेथा.—(l. 23) $D_6$ महाभागाः (for °त्मानः). $B_1$ श्रेयो- (for श्रियो). $Ñ_2$ $B_2$ (m. also) सुखस्य; $D_6$ शुभस्य (for भवस्य).—(l. 24) $D_6$ प्रष्टव्याः (for स्युश्च ते). $M_3$ सहाया (for ब्राह्मणा). $Ñ_2$ $B_1$ (m. also) ब्रह्मवेदिनः.—(l. 25) $B_2$ देवैः (for देवाः). $D_6$ प्रज्ञानां; $M_3$ पूज्याश्च (for प्रजानां). $Ñ_2$ विविधोत्तमाः.—(l. 26) $Ñ_2$ प्रयाता; $B_1$ (m. also) आश्रिता; $D_6$ प्रोषिता (for प्रेषिता). $M_3$ मानुषे लोके. $D_6$ इति श्रुताः (for द्विजातयः).—(l. 27) $M_3$ त्वं (for च). $M_3$ नीति- (for धर्म-). $D_6$ धर्मशास्त्राणि चैव हि (for the post. half).—(l. 28) $M_3$ धर्म- (for नीति-). $B_1$ राघव; $M_3$ पालय (for धारय).—(l. 29) $Ñ_2$ नागैर् (for नागे). $M_3$ योग्यां कुर्याश्च पुत्रक (for the post. half).—$B_1$ om. l. 30–31.—(l. 30) $Ñ_2$ विज्ञान-. $B_2$ गांधर्वविद्यासु तथा पारगो भव पुत्रक.—$Ñ_2$ $B_1$ $D_6$ $M_3$ om. l. 31.—(l. 32) $M_3$ भवेथास्त्वं (for भवेरपि). $B_1$ परंतपः.—(l. 33) $B_2$ $M_3$ [आ]सितुं. $M_3$ हि ते हितं (for हितं तव).—(l. 34) $D_6$ मे त्वया (for ते मम).—(l. 36) $M_3$ om. (hapl.?) एव in एवमुक्त्वा. $M_3$ दशरथो (for स नृपतिर्) and साश्रुलोचनं.

## 2

After 2.1.4, Ś$_{1}$ (after the second occurrence) D$_{1-5.7}$ ins. :

अमात्यैर्बहुभिर्गुप्तो रथैश्च शुभवाजिभिः ।
पादातेन च मुख्येन वृतः शतसहस्रशः ।
स पित्रा समनुज्ञातः परिष्वक्तश्च बाहुना ।
भरतः सिंहविक्रान्तः शत्रुघ्नश्च महामतिः ।
तं तदा प्रस्थितं वीरं भरतं वदतां वरम् । [ 5 ]
राजा दशरथो वाक्यमुवाच जनसंसदि ।
प्रस्थितस्त्वं नरवर मातामहकुलं शुभम् ।
संदेशं शृणु मे वत्स तं च कुर्याः समाहितः ।
शत्रुघ्नसहितो गच्छ मातामहकुलं विभो ।
स ते सहायो भविता स त्वां नित्यमनुव्रतः । [ 10 ]
संदेक्ष्यामि च त्वां भूयः संदेशं तव यद्धितम् ।
तव चैव महाबाहो शत्रुघ्नस्य च मानद ।
नित्यशश्च त्वया कार्या शुश्रूषा मातुलस्य वै ।
आर्यकस्य च ते नित्यं कार्यं कालेऽभिवादनम् ।
व्रतचर्या च ते पुत्र कर्तव्या नियतात्मना । [ 15 ]
ब्राह्मणैः सह धर्मात्मन्वासः सद्भिरुदाहृतः ।
काले काले यथोक्तं च ब्राह्मणानभिवादयेः ।
ब्राह्मणा हि श्रियो मूलं पुरुषस्य शुभार्थिनः ।
सहायार्थे च कर्तव्याः प्रणम्य नियतात्मना ।
सर्वविद्यान्तगा धन्या मङ्गल्या ब्राह्मणाः सदा । [ 20 ]
देवाः पुत्र भवार्थं वै प्रजानां सुरसत्तमैः ।
प्रेषिता मानुषं लोकं भूमिदेवा इति श्रुतिः ।
तेभ्यः सर्वाणि शास्त्राणि वेदांश्च वदतां वर ।
अस्त्रं शस्त्रं महास्त्रं च विधिवत्पुत्र धारय ।
अश्वपृष्ठे रथे चैव व्यायामं कुरु नित्यशः । [ 25 ]
गन्धर्वविद्यासु तथा पारगो भव पुत्रक ।
अन्येष्वपि च शिल्पेषु यत्नः कार्यः परस्त्वया ।
क्षणमप्यासितुं पुत्र वृथा नार्हसि सर्वथा ।
कुशलप्रेषणं चापि दूतैः कार्यं सदैव मे ।
श्रुत्वा कुशलिनं हि त्वां नन्दिष्यामि सबान्धवः । [ 30 ]
एवमुक्त्वा स नृपतिर्भरतं बाष्पगद्गदम् ।
व्याजहार महातेजा गम्यतां मा विचारय ।
सोऽभिवाद्य जितक्रोधो राजानं शिरसा तदा ।
मातरं च महाभागां शत्रुघ्नसहितस्तदा ।
स ययौ नगरं धीमान्बलेन परिवारितः । [ 35 ]
तथानुगम्यमानश्च सर्वैः पुरनिवासिभिः ।
रामेण च महाभागो लक्ष्मणेन च वीर्यवान् ।
पुरस्कृतो ययौ धीमान्प्रीतिस्निग्धौ हि तस्य तौ ।
अभिवाद्य रामं भरतः परिष्वज्य च लक्ष्मणम् ।
न्यवर्तयत धर्मात्मा तदा सर्वं सुहृज्जनम् । [ 40 ]
सुहृद्भिः कैश्चिदेवेह सह विद्वद्भिरात्मवान् ।
अनुगम्यमानो विधिवत्प्रयातः कृतमङ्गलः ।
निवर्त्य स जनं सर्वं प्रययौ शीघ्रवाहनः ।
पुरं मातामहजितं यदध्यास्ते स धर्मवित् ।

## 2

(l. 1) D$_{1}$ युक्तो (for गुप्तो). D$_{2}$ बहु- (for शुभ-). —(l. 2) Ś$_{1}$ मंडलेन; D$_{1.2}$ पदातिना; D$_{5}$ पदा° (for पादातेन). D$_{2}$ -सहस्रशैः. —(l. 3) D$_{1.4.5}$ समुपाघ्रातः; D$_{2}$ समुपाघ्राय; D$_{7}$ समनुघ्रातः (for समनुज्ञातः). —For l. 6, Ś$_{1}$ subst. :

उवाच राजा राजर्षिः सस्नेहं भरतं प्रति ।

—(l. 7) Ś$_{1}$ -कुलं प्रति; D$_{1.2}$ -गृहं शुभं (for -कुलं शुभम्). —D$_{2}$ om. l. 8–9. Ś$_{1}$ om. l. 8. —(l. 8) D$_{5}$ कुरु (for शृणु). D$_{1}$ तच् (for तं). D$_{5}$ कुर्यात् (for कुर्याः). —(l. 9) Ś$_{1}$ प्रति; D$_{5}$ शुभं (for विभो). —(l. 10) D$_{1}$ यस् (for second स). —(l. 11) D$_{2}$ om. च (subm.). Ś$_{1}$ तत्रापि; D$_{1-3}$ तं भूयः (for त्वां भूयः). D$_{4.7}$ संदेशस् (for °शं). Ś$_{1}$ D$_{4.7}$ सिध्यतां; D$_{1}$ यं हितं (for यद्धितम्). D$_{2}$ संदेशं च तव प्रियं (for the post. half). —(l. 12) D$_{1.2}$ transp. च and एव. D$_{1-3.5}$ -प्राज्ञ (for -बाहो). D$_{2}$ शत्रुघ्नश्च; D$_{3}$ missing (for शत्रुघ्नस्य). D$_{2}$ महात्मनः (for च मानद). —(l. 13) D$_{4}$ नित्यं शश्वत् (for नित्यशश्च). Ś$_{1}$ तु (for वै). —(l. 14) Ś$_{1}$ आर्यकर्म (for आर्यकस्य). D$_{1}$ [ऽ]-भिवादिनं (for ऽभिवादनम्). —(l. 15) D$_{1.5}$ व्रतचर्याश्; D$_{2.4}$ ब्रह्म°; D$_{3}$ वृतचर्याश् (for व्रतचर्या). Ś$_{1}$ त्वया (for च ते). D$_{2}$ नित्यं (for पुत्र). Ś$_{1}$ D$_{3.4.7}$ वै यतात्मना; D$_{1}$ विजिता° (for नियतात्मना). —(l. 16) D$_{1}$ ददेथाः समुदाहृतः; D$_{2.3}$ वेदे ये समुदाहृताः; D$_{5}$ कालो नेयः सदा त्वया (for the post. half). —(l. 17) Ś$_{1}$ यथोक्तं तु; D$_{1.2}$ यथोक्ते च (D$_{2}$ °षु) (for यथोक्तं च). —(l. 18) D$_{3}$ महात्मनः (for शुभार्थिनः). —(l. 19) D$_{4.5}$ सहायेर्थे (D$_{5}$ °पि). D$_{3}$ ब्राह्मणा (for प्रणम्य). —(l. 20) Ś$_{1}$ -[अ]नुगाः (for -[अ]न्तगा). D$_{2}$ मंगला (for मङ्गल्या). —(l. 21) D$_{4}$ भवार्थे. —(l. 22) Ś$_{1}$ मानुषे लोके (for °षं लोकं). —(l. 23) D$_{3}$ शास्त्राणि सर्वाणि. D$_{1.2}$ दत्तानि; D$_{3}$ दैवतं च (hypm.); D$_{5}$ दैवतं (for वेदांश्च). —(l. 24) D$_{4}$ अस्त्रशास्त्रं; D$_{5}$ अस्त्रं व्यस्त्रं (for अस्त्रं शस्त्रं). D$_{4}$ om. (subm.); D$_{5}$ वा (for च). Ś$_{1}$ D$_{4.7}$ विविधं (for विधिवत्). Ś$_{1}$ धारयेः; D$_{1.3}$ पालय; D$_{2.5}$ पारय (for धारय). —(l. 25) Ś$_{1}$ D$_{2.4.7}$ नित्यदा (for नित्यशः). —(l. 26) D$_{4.5.7}$ गांधर्व- (for गन्धर्व-). Ś$_{1}$ D$_{4}$ तदा (for तथा). —(l. 27) D$_{1}$ शल्येषु; D$_{2}$ शास्त्रेषु (for शिल्पेषु). D$_{7}$ यत्नं कार्यं परं त्वया (for the post. half). —D$_{5}$ om. l. 28–29. —(l. 28) D$_{1}$ स्थातुं (for पुत्र). Ś$_{1}$ D$_{3}$ सर्वदा; D$_{2}$ सर्वशः (for सर्वथा). D$_{1}$ पुत्र नार्हसि नान्यथा (for the post. half). —(l. 29) D$_{2}$ -प्रेरणं; D$_{3}$ -प्रेषितं (for -प्रेषणं). D$_{1.2}$ दूतैः (for चापि). D$_{1.2}$ कुर्याश्चैव; D$_{4.7}$ दूतैः कुर्याः (for दूतैः कार्यं). —(l. 30) D$_{1}$ संदेक्ष्यामि (for नन्दिष्यामि). D$_{2}$ संदेक्ष्यामि सबांधवं (for the post. half). —(l. 31) Ś$_{1}$ D$_{7}$ वाक्य- (for बाष्प-). —(l. 32) D$_{2}$ चाविचारय. —(l. 34) Ś$_{1}$ D$_{4.7}$ महाभागः (for महाभागां). —(l. 35) D$_{1.2.5}$ प्रययौ (for स ययौ). D$_{2.3.5}$ नगरीं (for नगरं). —(l. 36) D$_{5}$ तयानुगम्य°. —(l. 37) D$_{2}$ om. first च (subm.). Ś$_{1}$ महाबाहो (for महाभागो). —(l. 39) prior half hypm. —(l. 40) D$_{1.3}$ निवर्तयत (for न्य°). D$_{7}$ तथा (for तदा). —Ś$_{1}$ D$_{4}$ om. l. 41. —(l. 43) Ś$_{1}$ D$_{1}$ स्वजनं; D$_{2}$ सज्जनं (for स जनं). —(l. 44) D$_{1.2}$ माता-

कथायोगेन सुहृदां मनोज्ञेन सहानुगः । [ 45 ]
दिवसैः कैश्चिदेवाथ स श्रान्तबलवाहनः ।
सरितः पर्वतांश्चैव व्यतिक्रम्य सहानुजः ।
उपस्थितो वै नगरं तदा राजगृहं विभुः ।
स दूतं प्रेषयामास राज्ञो वृद्धस्य धीमतः ।
आर्यकस्य महातेजा भरतः प्रियदर्शनः । [ 50 ]
श्रुत्वा दूतस्य वचनं स राजा सह मन्त्रिभिः ।
प्रवेशयामास तदा भरतं नगरोत्तमम् ।
पुष्पैर्गन्धैश्च धूपैश्च सर्वतः समलंकृतम् ।
समुच्छ्रितपताकं च तूर्योत्कृष्टनिनादितम् ।
राजमार्गस्तदाकीर्णो जलेन च समुक्षितः । [ 55 ]
वेश्याभिर्वारमुख्याभिर्वाद्यानुगतशोभितः ।
पुरतो नृत्यमानाभिर्भरतस्य महात्मनः ।
नरमुख्यैश्च बहुभिः सूतमागधवन्दिभिः ।
स्तूयमानो यथान्यायं भरतः प्रविवेश ह ।
प्रविश्य च गृहं रम्यमभिवाद्य च मातुलम् । [ 60 ]
वृद्धं मातामहं चैव तथैव नृपयोषितः ।
स वै मातामहगृहे सर्वकामैः सुसत्कृतः ।
उवास स सुखी धीमान्कंचित्कालं नृपात्मजः ।

Colophon.

कदाचिद्भरतः श्रीमान्वृद्धं मातामहं नृपम् ।
अभिवाद्य महात्मानमिदं वचनमब्रवीत् । [ 65 ]
आचार्याननुगच्छेयं भवतोऽनुमते प्रभो ।
लेख्यसंस्थानशब्दज्ञान्नीतिशास्त्रार्थपारगान् ।
विविधासु च विद्यासु सुनिष्ठान्ब्राह्मणानपि ।
विनीतान्हस्तिशिक्षासु हयपृष्ठे तथैव च ।
गान्धर्वीषु च विद्यासु शिल्पजातिषु चापरान् । [ 70 ]
नरान्विनीतान्वृद्धान्वै वेत्तुमिच्छामि तत्त्वतः ।
ब्राह्मणान्वेदविदुषः प्राज्ञान्परमपूजितान् ।
व्यादिष्टान्भवतेच्छामि शिक्षार्थं मम नित्यशः ।
श्रुत्वा तु भरतस्यैतद्वचः परमहृष्टवान् ।
आज्ञापयत्तदा राजा यदुक्तं भरतेन वै । [ 75 ]
श्रुत्वा तु भरतो राज्ञा व्यादिष्टान्पुरुषांस्तदा ।
सर्वविद्यासु कुशलान्परं हर्षमवाप ह ।
प्रदाय शिष्यमात्मानं तेभ्यः स रघुनन्दनः ।
आचार्येभ्यस्तदा विद्यां धर्मेणाधिजगाम ह ।
सोऽनुपूर्वेण तान्सर्वान्परिजग्राह सुव्रतः । [ 80 ]
सह भ्रात्रा महातेजाः शत्रुघ्नेन यशस्विना ।
एवमाचार्यहस्तेषु वर्तमानो नरोत्तमः ।
रममाणो नरव्याघ्रः परं हर्षमवाप ह ।
शुश्रूषते यथान्यायमाचार्याञ्जितेन्द्रियः ।
अर्थमानप्रदानाभ्यां यथाकालमतन्द्रितः । [ 85 ]
ज्ञानाभ्यासप्रवृत्तस्य विज्ञानेऽभिरतस्य च ।
एवं कालो व्यतिक्रामत्सुमहान्भरतस्य च ।
यदा ज्ञानेषु निष्ठां वै प्राप्तवान्रघुनन्दनः ।
ततोऽस्य बुद्धिः संजाता धर्मं श्रोतुं सनातनम् ।
ब्राह्मणेभ्योऽथ वृद्धेभ्यो भिक्षुकेभ्यश्च धार्मिकः । [ 90 ]
ये चान्येऽपि महाभागा धर्मेषु कुशला द्विजाः ।

---

महत्सैव; D3 °युतं; D7 ततो महातेजा ( for मातामहजितं ). Ś1 यमध्यास्ते स; D2 तं यदध्यास्त; D7 दूरं तत्याज ( for यदध्यास्ते स ). —(l. 45) D2 अन्योन्येन ( for मनोज्ञेन ). D1.2 सहानुजः ( for °नुगः ). —(l. 46) D2 [ आ ]प ( for [ अ ]थ ). D1 समित्र- ( for स श्रान्त- ). —(l. 47) D3 सनदी- ( for सरितः ). D2 व्यतिगम्य (for °क्रम्य ). —(l. 48) D2 नगरीं ( for नगरं ). D1 महाराज- ( for तदा राज- ). D2 विभुं ( for विभुः ). —(l. 49) D1.2 संगतं (for स दूतं ). —(l. 52) D2 भरतो ( for भरतं ). —(l. 53) D2 transp. गंधैश्च and धूपैश्च. —Ś1 D3.4.7 transp. l. 54 and 55. —(l. 54) D3 समुत्थित- ( for समुच्छ्रित- ). —(l. 56) D1.5 लास्य-; D2 तस्य ( for वाद्य- ). Ś1 D3.4 -शोभितं (for -शोभितः ). —(l. 58) D1 स्तुतो ( for सूत- ). —(l. 59) D5 श्रूयमानो ( for स्तूयमानो ). —(l. 60) Ś1 D4.7 गृहे रम्ये (with hiatus ) ( for गृहं रम्यम् ). —(l. 61) D3 गृहं ( for वृद्धं ). —(l. 62) D1.2.5 सुसंस्कृतः; D4 पुरस्कृतः ( for सुसत्कृतः ). —(l. 63) Ś1 D2.4.7 समुखो ( D2.7 °खं ); D5 सुमुखी ( for स सुखी ). D3 किंचित्- ( for कंचित्- ).

Colophon.—*Sarga name* : Ś1 D1–5.7 भरत( D2.3 °ता )गमनं( Ś1 प्रवेशो; D3 गमनो; D4.7 प्रस्थानो ).—*Sarga no.* (figures, words or both ) : D1 53; D2.4.7 1; D3 45. —For lines 64–124 cf. No. 4.

—(l. 64) D3 missing for न्वृद्धं मा. —(l. 66) D3 missing for भवतोऽनु. D1.5( before corr. as in text ) भवता ( for भवतो ). Ś1 [ ऽ ]नुमतो. D2 नृप ( for प्रभो ). —(l. 67) D5 लेख-; D7 लिख्य- ( for लेख्य- ). Ś1 शब्दे च ( for शब्दज्ञान् ). Ś1 ज्योतिःशास्त्रस्य ( for नीतिशास्त्रार्थ- ). D2 -पारग ( for -पारगान् ). —(l. 68) D3 missing for द्यासु सुनि. D4.7 निष्णातान् ( for सुनिष्ठान् ). —D2 om. l. 69. —(l. 69) Ś1 विदितान् ( for विनीतान् ). —(l. 70) D1–4 गांधर्वांसु ( for °र्वीषु ). —(l. 71) D3 च ( for वै ). D1.2.5 राजविद्यान्वितान्शुद्धान्( D5 °विद्वन् ) ( for the prior half ). —(l. 72) Ś1 D3.4 वृद्धान् ( for प्राज्ञान् ). D7 अमरपूजितान्. —(l. 73) D1.2.5 शिष्यार्थं ( for शिक्षार्थं ). —Ś1 om. ( hapl. ) l. 74–75. —(l. 74) D2 [ अ ]थ ( for तु ). D5 -हृष्टवत् ( for -हृष्टवान् ). —(l. 75) D5 आज्ञापयंस् ( for °पयत् ). —D1.2 om. ( hapl.) l. 78–83. —(l. 79) D3 विद्वान् ( for विद्यां ). D3 [ अ ]भिजगाम ह. —(l. 80) Ś1 सोऽनुपूर्व्येण; D5 सानु° ( for सोऽनुपूर्वेण ). —(l. 82) D3.5 वर्तयन्रघु( D5 °न्नर )त्तमः ( for the post. half ). —(l. 84) Ś1 D3.4.7 शुश्रूषति ( for शुश्रूषते ). D1 यथायोग्यम्; D3 °न्याय्यम् ( for यथान्यायम् ). Ś1 D4 आचार्यं ( for °र्यान् ). —(l. 85) D5 अथ ( for अर्थ- ). D2 यथाकामम् ( for °कालम् ). —D3 om. l. 86–87. —(l. 86) D2.4.5 ज्ञानाभ्यासे. Ś1 ह ( for च ). —(l. 87) Ś1 D7 [ ऽ ]प्यतिक्रामत् ( for व्यति° ). D5 तु ( for च ). —(l. 88) D1.2.5 ज्ञाने सु- ( for ज्ञानेषु ). —(l. 89) D3 धर्मे ( for धर्मं ). —(l. 90) D1.2 यतिभ्यश्च; D4 [ ऽ ]प्य°; D5 भिक्षुकेभ्यो ( for ऽथ वृद्धेभ्यो ). Ś1 D1.3 भिक्षुकेभ्योथ; D5 वृद्धेभ्यो ह्यथ ( for भिक्षुकेभ्यश्च ). —(l. 91) D3 ये चान्ये च; D5 ये चान्येषु

तान्सर्वान्स महातेजाः सेवते धर्मकारणात् ।
अन्तरात्मनि धर्मोऽस्य सततं पर्यवर्तत ।
कथायां धर्मयुक्तायां रमते रघुनन्दनः ।
तपोऽहिंसारता नित्यं ये च धर्मपरायणाः । [ 95 ]
तान्सर्वान्स महातेजा उपास्ते निर्वृतः शुचिः ।
शास्त्राणि च महाप्राज्ञो नित्यशो गुणवन्त्यपि ।
वेदविद्यासु चान्यासु कुशलः सर्वशास्त्रवित् ।
कृतकृत्यमिवात्मानं मन्यते धर्मसेवनात् ।
तस्य बुद्धिः समभवत्पितुः संप्रेषणं प्रति । [ 100 ]
संदिदेश तदा दूतं ब्राह्मणं शुभलक्षणम् ।
अयोध्यां गच्छ भद्रं ते दूत शीघ्रं नृपोत्तमम् ।
पितरं कुशलं ब्रूहि मातृश्च भ्रातरौ तथा ।
पृष्ट्वा च कुशलं तेभ्यो वाच्यो दशरथः प्रभुः ।
मातामहगृहे तात वर्तते त्वदनुग्रहात् । [ 105 ]
यथाज्ञप्तं कृतं तात महत्तव कृतं शुभम् ।
स तु तेनाभ्यनुज्ञातो भरतेन यशस्विना ।
दूतः परमसंहृष्टः प्रयातो येन सा पुरी ।
अयोध्यां नगरीं रम्यां प्रविवेश महातपाः ।
यां च राजीवताम्राक्षो राजा दशरथोऽवसत् । [ 110 ]
प्रासवानथ तां दूतो भरतस्यानुशासनात् ।
न्यवेदयत तद्राज्ञे मातृभ्योऽथ द्विजस्तथा ।
कृतकृत्योऽथ राजेन्द्र भरतः सत्यविक्रमः ।
धनुर्वेदे च वेदे च नीतिशास्त्रे च पारगः ।
अर्थशास्त्रेषु कुशलो व्यायामे च तथैव च । [ 115 ]
हस्तिशिक्षासु निपुणो रथशिक्षाविशारदः ।
आलेख्ये चैव लेख्ये च लङ्घने प्लवने तथा ।
ज्योतिर्गतिषु निष्णातस्तव वाक्येन नोदितः ।
एवंविधानि कर्माणि कृतानि सुबहून्यपि ।
कृतार्थौ भरतो राजंस्त्वत्सकाशमुपेष्यति । [ 120 ]
श्रुत्वा राजा प्रहृष्टोऽभूद्दूतस्य वचनं तदा ।
कौसल्याद्याश्च देव्यस्तास्तथोभौ रामलक्ष्मणौ ।
प्रतिसंश्रुत्य नृपतिस्तं दूतं भरतस्य वै ।
अभवन्मुदितः श्रीमांस्तदा दशरथो नृपः ।

Colophon.

## 3

After 2.1.4, Ñ2 B1.2 D6 M3 ins. :

बलेन महता वीरश्चतुरङ्गेन संवृतः ।
तथानुगम्यमानश्च सर्वैः पुरनिवासिभिः ।
भ्रातृस्नेहाच्च रामेण लक्ष्मणेन च वीर्यवान् ।
गत्वा पुरस्कृतो धीमांस्ततो गव्यूतिमात्रकम् ।
अवरुह्य स्वकाद्यानाद्भरतः कैकयीसुतः । [ 5 ]
शत्रुघ्नसहितः पादौ रामस्य शिरसा ययौ ।
तौ पादयोर्निपतितौ शत्रुघ्नभरतावुभौ ।
दोर्भ्यामुत्थाप्य रामोऽपि परिष्वज्येदमब्रवीत् ।
कैकेयीमातरिह मां स्मरेस्त्वं सहलक्ष्मणम् ।

( for °न्येऽपि ). —( l. 92 ) Ś1 सर्वे ते ( for सेवते ). D1 ये च धर्मपरायणाः ( for the post. half ). —( l. 94 ) D1 -वृत्तायां ( for -युक्तायां ). —( l. 95 ) D1 reads l. 95 after l. 92. D1 तपोभिनिरता नित्यं सेवने धर्मकारणात्. —( l. 96 ) D1 च भृशं; D2.4.7 निभृतः ( for निर्वृतः ). —( l. 97 ) D1 [ ए ]व सहसा; D3 °भागो ( for महाप्राज्ञो ). Ś1 गुणवानपि ( for गुणवन्त्यपि ). D1 तेजस्वी शाश्वतानि ते; D2 नित्यं स गुणवानपि ( for the post. half ). —( l. 98 ) D7 वा ( for च ). —( l. 99 ) D5 मन्यसे ( for मन्यते ). —( l. 100 ) D3 संप्रेक्षणं ( for संप्रेषणं ). —( l. 103 ) Ś1 D2.5.7 मातॄंश्च ( for मातृश्च ). —( l. 104 ) D2 वंचो ( for वाच्यो ). —( l. 105 ) D1.5 वर्तीतां; D4.7 वर्तेहं ( for वर्तते ). —( l. 106 ) D1–3.5 शुभं प्रियं ( for कृतं शुभम् ). —( l. 107 ) D5 सुतेन ( for तु तेन ). —( l. 108 ) D1.2.5 मनुना निर्मितां पुरा ( for the post. half ). —( l. 110 ) D2–4.7 स ( for च ). D3.5 [ ऽ ]न्वशात् ( for ऽवसत् ). —For l. 110, D1 subst. :

यां स * जीवनाप्राज्ञो राजा दशरथोऽन्वगात् ।

—( l. 111 ) Ś1 च तथा; D2 अरथां ( for अथ तां ). D1.2 हृष्टो ( for दूतो ). —( l. 112 ) D1.2 निवेदयत ( for न्यवेद° ). D1.3 राज्ञो ( for राज्ञे ). D5 न्यवेदयत्ततः प्राज्ञो ( for the prior half ). D5 [ ऽ ]र्थ ( for ऽथ ). D1–5 तदा ( for तथा ). —( l. 114 ) D3 वेदेषु ( for वेदे च ). Ś1 D4.7 -शास्त्रेषु ( for -शास्त्रे च ). —( l. 115 ) D1–3 -शास्त्रे च ( for -शास्त्रेषु ). Ś1 व्यायामेषु ( for व्यायामे च ). —( l. 116 ) D1–3.5 निष्णातो; D4.7 कुशलो ( for निपुणो ). D3 om. ( hapl. ) from the post. half of l. 116 up to the prior half of l. 118. D2.5 -सुनिष्ठितः ( for -विशारदः ). D1 रत्नशिष्यास्त्रनिष्ठितः ( for the post. half ). —( l. 117 ) D2.5 आलिख्ये ( for आलेख्ये ). —( l. 119 ) D4.5 चोदितः ( for नोदितः ). —( l. 120 ) D2 गमिष्यति; D4.5 उपै° ( for उपेष्यति ). —( l. 121 ) D6 subst. l. 121–124 for l. 61–64 of App. I ( No. 4 ); while B1 subst. l. 121 and 122 for l. 61 and 62 and cont. l. 123–24; on the other hand, B2 ins. those lines after l. 60 ( for var., see App. I [ No. 4 ] ). Ś1 D3.4.7 प्रहृष्टात्मा ( for प्रहृष्टोऽभूद् ). D1 श्रुतं; D2 शुभं; D5 तथा ( for तदा ). —Ś1 om. ( hapl. ? ) l. 122 and 123. —( l. 122 ) D1.2 च देव्यश्च; D5 सुदेव्यस्तास् ( for च देव्यस्तास् ). —( l. 123 ) D2 तु पतिस् ( for नृपतिस् ). D4.7 वचो दूतस्य वै तदा ( for the post. half ). —( l. 124 ) D2 अर्थवन् ( for अभवन् ). D5 न्युदितः ( for मु° ). D1.2.5 तथा ( for तदा ). D1 [ ऽ ]ब्रवीत्; D2.5 चिरं ( for नृपः ).

Colophon. —*Sarga name* : Ś1 D4.7 दूताभिगमनः( Ś1 °नं ); D1–3.5 भरत( D5 भरतस्य )दूतागमनं( D3 °नः ); D2 भरतगमनं. —*Sarga no.* ( figures, words or both ) : D1 54; D2.4.5.7 2.

## 3

( l. 2 ) D6 ( before corr. as in text ) [ अ ]नुगम्यमानैश्.- M3 अनुगम्यमानोनुरक्तैर् ( hypm. ) ( for the prior half ) and जनैः ( for सर्वैः ). —For l. 4, M3 subst. :

गत्वा गव्यूतिमात्रं च रामेणानुगतस्ततः ।

शत्रुघ्नसहितं च त्वां स्मरिष्यामि सलक्ष्मणः। [ 10 ]
इत्युक्तो भरतो रामं प्रणिपत्याभिवाद्य च।
लक्ष्मणं च परिष्वज्य शत्रुघ्नसहितो ययौ।
अनुगम्यमानो बहुभिः सुहृद्भिः प्रियवादिभिः।
अनुरक्तैस्तथैवान्यैरपरित्यागिभिः प्रियैः।
निवर्त्य स्वजनान्मान्यांस्ततः शीघ्रतरं ययौ। [ 15 ]
श्रीमन्मातामहपुरं द्रष्टुं त्वरितमानसः।
सुहृद्भिः सह मार्गेषु विहरन्प्रियवादिभिः।
अहोभिर्गणितैः कैश्चिदश्रान्तबलवाहनः।
वनानि सरितः शैलानतीत्य सुमनोहरान्।
आससाद पुरं राज्ञो रम्यं राजगृहं विभुः। [ 20 ]
अभ्याशस्थस्ततो राज्ञे दूतं मातामहाय सः।
प्रेषयामास भरतः प्राप्तोऽस्मीत्याप्तकारिणम्।
श्रुत्वा च दूतवचनं स राजा भृशहर्षितः।
प्रवेशयामास पुरं भरतं परमार्चितम्।
आहार्यसिकताकीर्णं पुष्पोत्करविभूषितम्। [ 25 ]
राजमार्गं कारयित्वा जलेन सुसमुक्षितम्।
विन्यस्तपूर्णकलशं वनमालाविभूषितम्।
समुच्छ्रितपताकं च धूपगन्धाधिवासितम्।
ततः प्रवेशयामासुर्भरतं पुरवासिनः।
सर्वतूर्यस्वनैश्चाराद्वाद्यमानैश्च नन्दितम्। [ 30 ]
वेश्याभिर्वारमुख्याभिर्वाद्यानुगतमुल्बणम्।
नृत्यन्तीभिः पुरस्तात्तु पुरं तत्प्रविवेश सः।
वल्गुवाग्भिः स्तूयमानः सूतमागधबन्दिभिः।
ब्राह्मणैश्च तपःसिद्धैः पूतः साम्ना च यज्वभिः।
श्रीमन्मातामहगृहं क्रमेणैव प्रविश्य सः। [ 35 ]
वृद्धं मातामहं तत्र ददर्शाभिननाम च।
राज्ञा तेन परिष्वक्तः पृष्टश्चानामयं ततः।
प्रविश्यान्तःपुरं तत्र प्राणमद्राजयोषितः।
श्रीमद्राजगृहं प्राप्य तद्वृद्धजनसंकुलम्।
स वै मातामहगृहे सर्वकामैः प्रपूजितः। [ 40 ]
उवास सुसुखं तत्र भरतः श्रीमतां वरः।

## 4

After 2.1.14 ( after the colophon ), Ñ2 B1.2 D6 ins., while M4 ins. after 2.1.7 :

कदाचिद्भरतः श्रीमान्वृद्धं मातामहं नृपम्।
प्रातरुत्थाय वचनमभिवाद्येदमब्रवीत्।
आचार्यानुपसेवेयं प्रदिष्टान्भवता हि तान्।
धर्मार्थज्ञानकुशलाँल्लेख्यसंख्याविदस्तथा।
इष्वस्त्रकुशलांश्चैव नीतिशास्त्रविशारदान्। [ 5 ]
हस्त्यश्वरथयानेषु तथैव परिनिष्ठितान्।
गान्धर्वविद्याकुशलान्नानाशिल्पविदस्तथा।
तथान्यान्वेदवेदाङ्गपारगान्विनयान्वितान्।
उपसेवितुमिच्छामि श्रेयोऽर्थी दृढमात्मनः।
भवतानुमतो राजन्प्रदेष्टुं तान्ममार्हसि। [ 10 ]

—(l. 7) B1 -सहिताद् ( for -भरताद् ). —(l. 9) B2 M3 मा (for मां). B1 सरेस्तु; M3 सरेथा ( for स्मरेस्त्वं ). —(l. 10) Ñ2 च त्वा; M3 त्वां हि ( for च त्वां ). M3 स्मरिष्ये सहलक्ष्मणः (for the post. half). —(l. 12) M3 लक्ष्मणश्च परिष्वक्तः (for the prior half). —(l. 13) Prior half hypm. M3 [ऽ]नेकैस्तु (for बहुभिः) and -कारिभिः (for -वादिभिः). —M3 om. (hapl.) l. 14. —(l. 14) B1.2 च (for [ए]व). —(l. 15) B1 [आ]शु जनान्; D6 स्वजन-; M3 [अ]न्याञ्जनान् (for स्वजनान्). D6 -[अ]मात्यांस् (for मान्यांस्). —(l. 16) B1.2 M3 श्रीमान् (for श्रीमन्). M3 -कुलं गंतुं (for -पुरं द्रष्टुं). —(l. 17) M3 प्रिय- (for सह). B1 (m. also as above) विचरन् (for विहरन्). —(l. 18) B2 गलितैः; D6 च ततः (for गणितैः). —(l. 20) M3 महत् (for विभुः). —(l. 21) D6 राज्ञो (for राज्ञे). —(l. 22) Ñ2 D6 [आ]शु° (for [आ]प्त°). —(l. 23) M3 तद् and प्रिय- (for च and भृश- respy.). —(l. 24) D6 प्रावेशयामास. —B1 om. (hapl.?) l. 25. —(l. 25) M3 आराध्य- (for आहार्य-). —M3 om. (hapl.!) l. 26–30. —(l. 26) B1 जलैश्च (for जलेन). —(l. 27) D6 विन्यस्य (for विन्यस्त-). —(l. 28) B1.2 गंधादिवासितं. —(l. 30) D6 स बभूव (for सर्वतूर्य-) and नंदितः (for नन्दितम्). —(l. 31) M3 वाक्य- (for वाद्य-). B1.2 -[अ]नुगमम् (for -[अ]नुगतम्). M3 ऋद्धिमत् (for उल्बणम्). —(l. 32) M3 पुरतो नृत्यमानाभिः (for the prior half). B1 (m. also) M3 ह (for सः). —B1 om. (hapl.?) l. 33–35. —(l. 33) B2 बहु- (for वल्गु-). D6 वाग्भिश्च स्तूयमानस्तु (for the prior half). —Ñ2 B1 D6 M3 om. l. 34. —(l. 35) B2 M3 श्रीमान् (for श्रीमन्). M3 -कुलं (for -गृहं) and [ए]कं (for [ए]व). B2 भरतः प्रविवेश ह (for the post. half). —D6 om. l. 36. —(l. 36) M3 वृद्ध- (for वृद्धं). Ñ2 [अ]भिननंद; B1 [अ]भिववाद (for [अ]भिननाम). —For l. 38, M3 subst. :

प्रविश्याभ्यन्तरं पूज्याः प्रणेमे राजयोषितः।

—(l. 39) M3 श्रीमान् (for श्रीमद्). —M3 om. l. 40. —(l. 40) B1 om. गृहे and reads सुपूजितः (for प्र°). —(l. 41) D6 समुखं (for सुसुखं).

## 4

For this, cf. lines 64–124 of No 2. M4 begins with हरिः श्रीगणपतये नमः. —(l. 1) M4 भरतस्तु वसंस्तत्र (for the prior half). Ñ2 D6 तत्र; M4 नित्यं (for वृद्धं). —(l. 3) M4 missing from सुप up to लेख्य in l. 4. B2 प्रभो (for हि तान्). B1 प्रतिदिष्टान्हि तान्प्रभो (for the post. half). —(l. 4) B1 (*inf. lin.* also as above) नानाशिल्प- (for लेख्य-संख्या-). —(l. 5) M4 -विदोपि च (for -विशारदान्). —(l. 6) M4 -योग्येषु (for -यानेषु). —(l. 7) D6 गंधर्व- (for गान्धर्व-). M4 -विद्या- (for -शिल्प-). —(l. 8) B1.2 -न्यायशास्त्रार्थपारगान् (for the post. half). —(l. 9) D6 श्रेयोर्थो (for °र्थी). M4 हितम् (for दृढम्). —(l. 10) B2 M4 भवतो (for भवता). B2 [ऽ]नुमते (for [अ]नुमतो). Ñ2 त्वम् (for मम).

श्रुत्वैवं नृपतिर्वाक्यं केकयो भरतस्य सः।
व्यादिदेश प्रहृष्टात्मा तस्याचार्यान्विपश्चितः।
तानुपास्य च यत्नेन भरतः केकयीसुतः।
वेदवेदाङ्गशास्त्राणां ग्रहणे तत्परोऽभवत्।
निवेद्य शिष्यमात्मानं गुरूणां विनयान्वितः। [ 15 ]
जग्राह वेदवेदाङ्गशास्त्राणि गुणवृद्धये।
आनुपूर्व्या हि शास्त्राणामागमे भृशमुद्यतः।
विद्यानां च सशिल्पानां शत्रुघ्नसहितस्तदा।
जगाम स महातेजा नानाचार्यपरंपराम्।
शिक्षमाणः प्रयत्नेन विनयाचारयन्त्रितः। [ 20 ]
मानदानपुरस्कारैराचार्यान्प्रत्यपूजयत्।
शुश्रूषापरमो भूत्वा विनयं परमाप सः।
ज्ञानाभ्यासरतस्यैवं भरतस्य महात्मनः।
जगाम सुमहान्कालो वसतस्तत्र धीमतः।
विविधेषु यदा निष्ठां ज्ञानेषूपजगाम सः। [ 25 ]
तदास्य बुद्धिः संजज्ञे तत्त्वार्थाधिगमे पुनः।
विद्याशीलवयोज्ञानवृद्धेभ्यो विदितात्मनः।
अन्येभ्यश्चापि तत्त्वार्थवेदिभ्यः संनिकर्षतः।
यो यो वेत्ति हि तत्त्वार्थं छिन्नधर्मार्थसंशयः।
धर्मार्थकाममोक्षाणां सिषेवे तं तमेव हि। [ 30 ]
नानाज्ञानकथाभिर्हि रेमे स विजहार च।
भरतो ज्ञानतत्त्वार्थवेदने सततोद्यतः।
स यदा ज्ञानविज्ञानविनयेषु कृतागमः।
आत्मानं भरतो मेने छिन्नधर्मार्थसंशयम्।
तदास्य बुद्धिः संजज्ञे दूतं प्रेषयितुं पितुः। [ 35 ]
अथाहूयाब्रवीद्वृद्धं सुहृदं ब्रह्मवादिनम्।
अयोध्यां गच्छ भद्रं ते त्वरितो जवनैर्हयैः।
पितरं तत्र कौसल्यां ब्रूयास्त्वं मातरं च मे।
मातामहकुले चापि यथा वर्तामहे वयम्।
तथा पूर्वं भवाञ्शंसेत्पितुर्मातुश्च मेऽग्रतः। [ 40 ]
रामश्चोपेत्य विज्ञाप्यो मामुद्दिश्य सगौरवम्।
भृत्यस्ते भरतः पादौ मूर्ध्नाभ्यर्च्य प्रसाद्य च।
कुशलानामयं स्निग्धं पृच्छतीति समागमे।
लक्ष्मणश्च परिष्वज्य प्रष्टव्यः कुशलं त्वया।
ब्रूयाश्च मातरं मे त्वं कौसल्यामभिवादनम्। [ 45 ]
सुमित्रामपि च ब्रूया वैदेहीं चाभिवादनम्।
स तेनैवं समादिष्टो भरतेन महात्मना।
दूतः शीघ्रहयो भूत्वा प्रत्ययौ यत्र सा पुरी।
अयोध्या सुभृशं रम्या मनुराजर्षिनिर्मिता।
यां स राजीवताम्राक्षो राजा दशरथोऽन्वशात्। [ 50 ]
प्रासवानचिरेणैव स तां भरतशासनात्।
न्यवेदयत्तदा राज्ञे मातृभ्योऽथ द्विजस्तथा।
कृतकृत्योऽथ राजेन्द्र भरतः सत्यविक्रमः।
धनुर्वेदे च वेदे च नीतिशास्त्रे च पारगः।
अर्थशास्त्रे च कुशलो व्यायामेऽपि तथैव च। [ 55 ]
हस्तिशिक्षासु निष्णातो रथशिक्षासु निष्ठितः।
आलेख्ये चैव लेख्ये च लङ्घने प्लवने तथा।
ज्योतिर्गतिषु निष्णातस्तव वाक्येन चोदितः।

—(l. 11) $B_{1.2}$ [ ए ]व; $M_4$ तु ( for [ ए ]वं ). $M_4$ तु ( for सः ). —(l. 12) $\tilde{N}_2$ स; $D_6$ सु- ( for प्र- ). —(l. 13) $M_4$ प्रयत्नेन ( for च य° ). —(l. 15) $\tilde{N}_2$ विनयानतः ( for विनयान्वितः ). —(l. 16) $M_4$ [ आ ]त्मगुणर्धये ( for गुणवृद्धये ). —(l. 17) $M_4$ हि समुद्यतः ( for भृश° ). —(l. 18) $M_4$ चैव शिल्पानां ( for च स° ). $\tilde{N}_2$ तथा ( for तदा ). —(l. 19) $D_6$ -परस्परम् ( for -परंपराम् ). —(l. 21) $B_{1.2}$ दानमान- ( by transp. ). $B_1$ -पुरस्सारैर् ( for -पुरस्का° ). $M_4$ समपूजयत्. —$M_4$ om. l. 22. —(l. 23) $B_1$ om. from first त up to second त. —$M_4$ om. (hapl.) l. 24–27. —(l. 26) $B_1$ illeg. for संजज्ञे तत्त्वार्था. $\tilde{N}_2$ $B_2$ -[अ]र्थाभिगमे; $D_6$ -[ अ ]धिगमने ( for -[ अ ]र्थाधिगमे ). —(l. 28) $\tilde{N}_2$ अन्ये**श्च. $M_4$ -वेदाभ्यासं हि कुर्वतः ( for the post. half ). —(l. 29) $M_4$ तत्त्वार्थं- ( for °र्थं ). $B_1$ illeg. for धर्मार्थसंशयः. —(l. 30) $M_4$ -कामार्थ- ( by transp. ) ( for -[ अ ]र्थकाम- ) $M_4$ तं तं सोसेवतात्मवान् ( for the post. half ). (l. 31) $B_1$ illeg. after कथा up to the end of the line. $M_4$ रराम ( for रेमे स ). —(l. 32) $D_6$ -तत्त्वार्थौ ( for °र्थ- ). $B_1$ स तथा; $B_2$ ( m. also as above ) स तदा ( for सतत- ). —(l. 33). $\tilde{N}_2$ $B_{1.2}$ (after corr.) $D_6$ -[ आ ]गमं ( for °मः ). —(l. 34) $B_1$ भरतं ( for °तो ). —(l. 35) $M_4$ ततो ( for तदा ). $M_4$ पुनः ( for पितुः ). —(l. 36) $B_{1.2}$ स आहूय; $M_4$ समाहूय ( for अथा° ). $B_1$ illeg. for द्वृद्धं सुहृदं. $M_4$ स्निग्धं ( for वृद्धं ). —(l. 37) $M_4$ damaged from त्व up to व. —(l. 39) $M_4$ चास्मिन् ( for चापि ) and वर्ताम्यहं वसन् ( for °महे वयम् ). —(l. 40) $M_4$ सर्वं ( for पूर्वं ) and शंस ( for शंसेत् ). —$B_1$ illeg. from ञ्शंसेत् up to विज्ञाप्यो in l. 41. $\tilde{N}_2$ $D_6$ तच्च त्वं पूर्वमाशंसेः ( for the prior half ). —(l. 41) $M_4$ त्वया द्विज ( for सगौरवम् ). —(l. 42) $B_1$ illeg. after the prior half up to the end of l. 43. $M_4$ शिरसाभि- ( for मूर्ध्नाभ्यर्च्य ) and तु ( for च ). —(l. 43) $M_4$ समं जनैः ( for समागमे ). $D_6$ पृच्छयित्वा सबांधवं ( for the post. half ). —(l. 44) $B_1$ लक्ष्मण*. —$B_1$ illeg. for l. 45. —(l. 45) $M_4$ [ ऽ ]द्य ( for त्वं ). $M_4$ अभिवादयन्. —(l. 46) $\tilde{N}_2$ $D_6$ मे ( for first च ). $D_6$ ब्रूयाद् ( for ब्रूया ). $M_4$ कैकेयीमभिवादयेः ( for the post. half ). —(l. 48) $M_4$ शीघ्रतरो. $B_{1.2}$ त( $B_2$ दू )तः परमसंहृष्टः ( for the prior half ). $\tilde{N}_2$ $B_{1.2}$ $D_6$ येन ( for यत्र ). —(l. 49) $B_1$ reads acc. sing. for nom. sing. of all words. $M_4$ सा तु ( for मनु- ). —(l. 50) $M_4$ तां ( for स ). $\tilde{N}_2$ **रथो ( for दश° ). $\tilde{N}_2$ $B_1$ [ ऽ ]न्वगात् ( for ऽन्वशात् ). —(l. 51) $B_1$ आप्त° ( for प्राप्त° ). —For l. 51, $D_6$ subst. :

प्राप्तवानथ तां दूतो भरतस्यानुशासनात्।

—(l. 52) $\tilde{N}_2$ $M_4$ कुशलिनं; $B_1$ तद्राज्ञे ( subm. ) ( for तदा राज्ञे ). $D_6$ न्यवेदयत तद्राज्ञे ( for the prior half ). $\tilde{N}_2$ $M_4$ राज्ञो ( $M_4$ तेषां ) भरतमंतिके ( for the post. half ). —$\tilde{N}_2$ $M_4$ om. l. 53–60. —(l. 53) $D_6$ हि ( for ऽथ ). —(l. 54) $B_1$ -शास्त्रेषु ( for -शास्त्रे च ). —(l. 55) $B_1$ -शास्त्रेषु ( for -शास्त्रे च ). $B_2$ $D_6$ च ( for ऽपि ). $D_6$ हि ( for च ). —(l. 56) $B_{1.2}$:

एवंविधानि कर्माणि कृतवान्सुबहून्यपि ।
कृतार्थो भरतो राजंस्त्वरस्वकाशमुपैष्यति । [ 60 ]
तच्छ्रुत्वा मुमुदे राजा दूतस्य वचनं प्रियम् ।
कौसल्या च सकैकेयी सुमित्रा राम एव च ।
प्रतिसंदिश्य तं राजा दूतं सत्कृत्य चार्हतः ।
प्रेषयामास नृपतिर्भरतस्य पुनस्तदा ।

Colophon.

## 5

After l. 3 of 29*, D1 ins.; while D5 ins. (om. l. 2-3) before 2.3.1 :

(2.2.25$^{cd}$) प्राच्योदीच्याः प्रतीच्याश्च तदा पृच्छन्त्यनामयम् ।
(2.2.26$^{ab}$) अग्निहोत्रेषु दारेषु शिष्यप्रेष्यजनेषु च ।
(54*) अनुकम्पयन्निव सदा पृच्छत्यस्माननामयम् ।
(2.2.31$^{ab}$) अभ्यन्तरे च बाह्ये च पौरजानपदा जनाः ।
(47[A]*) धर्मज्ञेन विनीतेन वदान्येन महात्मना । [ 5 ]
(47* l. 7) कृती रामो धनुर्वेदे दिव्यास्त्रविदसंशयम् ।
(47* l. 8) अमोघास्त्रो दूरवेधी समोघश्च दृढायुधः ।
(2.2.24$^{ab}$) यं यं व्रजति संग्रामं रामो राजंस्तवाज्ञया ।
(52*) ततस्ततो विजित्यारीन्विजयी विनिवर्तते ।
(53*) { जित्वापि वैरिसैन्यानि यदायं विनिवर्तते । [ 10 ]
तदापि प्रस्(श्रि)ततरो भूत्वा स्वान्पूजयत्यतः ।
(2.2.25$^{ab}$) प्रवासात्पुनरागत्य कुञ्जरेण रथेन तु ।
(2.2.31$^{cd}$) स्त्रियो वृद्धास्तरुण्यश्च देवराजं गृहे गृहे ।
(57*) अभियाचन्ति रामस्य यौवराज्याभिषेचनम् ।
(2.2.32$^{cd}$) तासामथोचितः कामस्त्वत्प्रसादान्नृपोत्तम । [ 15 ]
(2.2.33) { राममिन्दीवरश्यामं प्रजानामनुरञ्जकम् ।
पश्येम युवराजानमभिषिक्तं त्वदाज्ञया ।
(58*) { स राजवर्यस्तमजमात्मवन्तं
गुणाभिरामं गुणलोककान्तम् ।
रामं नृदेवार्हसि लोकनाथ-
मिहाभिषेक्तुं युवराजमुर्व्याम् । [ 20 ]

Colophon.

D1 Cont. :

ततः प्राञ्जलिमालास्ताः प्रतिगृह्य समन्ततः ।
हृष्टो दशरथो राजा प्रोवाचेदं वचस्तदा ।
अहोऽस्म्यनुगृहीतोऽद्य भवद्भिः प्रियवादिभिः ।
यन्मे ज्येष्ठं प्रियं पुत्रं युवराजानमिच्छथ ।
इति राजा संभाष्यैवं पौरान्भूयोऽब्रवीदिदम् । [ 5 ]
वसिष्ठं वामदेवं च तेषामेवोपशृण्वताम् ।
चैत्रः श्रीमानयं मासः पुण्यपुष्पितकाननः ।
रामस्य यौवराज्यं मे दातुमत्राभिरोचते ।
आभिषेचनकं द्रव्यं भवन्तो ज्ञापयन्तु माम् ।
यन्मयात्रोपकर्तव्यं रामराज्याभिषेचने । [ 10 ]
ते तथेति प्रतिज्ञाय नृपतेर्वचनं तदा ।
लेखयांचक्रतुर्द्रव्यं तं च प्रत्यभिनन्दतुः ।
कृतमित्येव चाब्रूतामधिगम्य नराधिपम् ।
सुप्रीतमनसौ प्रीतौ हर्षयन्तौ पुनर्नृपम् ।
ततः सुमन्त्रमाहूय राजा दशरथोऽब्रवीत् । [ 15 ]
रामः कृतात्मा भवता शीघ्रमानीयतामिति ।
स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ।
रामं तत्रानयांचक्रे रथेन रथिनां वरम् ।
अथ तत्र समानीतस्तदा दशरथं नृपम् ।

---

निश्चितः.—(l. 57) B1 om. (hapl.); D6 चैव लक्ष्ये (for चैव लेभे).—(l. 59) B1 कृतानि; D6 कृत्वा च (for कृतवान्).—For l. 61-64, D6 subst. l. 121-124 of App. I (No. 2), while B1 subst. l. 121-122 for l. 61-62 and cont. l. 123-24; on the other hand B2 ins. those 4 lines after l. 60 (cf. v.l. App. I [No. 2]).—(l. 61) M4 transp. मुमुदे and वचनं.—(l. 62) B2 सुमित्रा च (for सकैकेयी) and कैकेयी रामलक्ष्मणौ (for the post. half).—(l. 64) M1 मुदितो भरताय (for नृपतिर्भरतस्य).

Colophon. *Sarga name* : Ñ2 B1.2 D6 भरतदूतागमनं.—*Sarga no.* (figures, words or both) : B1.2 D6 om.; Ñ2 80; M4 1.

## 5

D5 variants :—reads l. 1 and 4 after l. 12.—(l. 1) राजमार्गेषि दृष्ट्वा नः स्मित्वा पृच्छत्यनामयं.—(l. 4) पौरजानपदे.—(l. 5) transp. विनीतेन and वदान्येन.—(l. 6) धनुर्वेदे.—(l. 7) चित्रवेधी (for समोघश्च).—(l. 9) विजित्यारिं.—(l. 10) चारि- (for वैरि-).—(l. 11) नः (for स्वान्).—(l. 12) वा (for तु).—(l. 13) देवान्राजन् (for देवराजं).—(l. 15) अयाचितः (for अथोचितः) and समृध्यतां (for नृपोत्तम).—(l. 18) तं (for स).—(l. 19) नर- (for second गुण-).—*Sarga name* : D1 रामप्रशंसा; D5 रामप्रशंसनः.—*Sarga no.* (figures, words or both) : D1 55; D5 6.

## 6

After 62*, Ś1 D1–5.7 ins.; Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. after 2.3.4; V1 B4 ins. lines 6–18; 25–27, and 30–31 only after l. 2 of 63* :

राज्ञस्तूपरते वाक्ये जनघोषो महानभूत्।
शनैस्तस्मिन्प्रशान्ते च जनघोषे नराधिपः।
वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत्।
अभिषेकाय रामस्य यत्कर्म सपरिच्छदम्।
तदद्य भगवन्सर्वमाज्ञापयितुमर्हसि। [ 5 ]
तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः।
आदिदेशाग्रतो राज्ञः स्थितान्युक्तान्कृताञ्जलीन्।
सुवर्णादीनि रत्नानि बलीन्सर्वौषधीरपि।
शुक्लमाल्यानि लाजांश्च पृथक्च मधुसर्पिषी।
अहतानि च वासांसि रथं सर्वायुधान्यपि। [ 10 ]
चतुरङ्गबलं चैव गजं च शुभलक्षणम्।
चामरव्यजने श्वेते ध्वजं छत्रं च पाण्डुरम्।
शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम्।
हिरण्यशृङ्गं वृषभं समग्रं व्याघ्रचर्म च।
यच्चान्यत्किंचिदेष्टव्यं तत्सर्वमुपकल्प्यताम्। [ 15 ]
उपस्थापयत प्रातरग्न्यगारे महीपतेः।
अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च।
चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः।
प्रशस्तमन्नं गुणवद्दधिक्षीरोपसेचनम्।
द्विजानां शतसाहस्रं यत्प्रकाममलं भवेत्। [ 20 ]
सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम्।
घृतं दधि च लाजाश्च दक्षिणाश्चापि पुष्कलाः।
सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम्।
ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च।
आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम्। [ 25 ]
सर्वे च तालापचरा गणिकाश्च स्वलंकृताः।
कक्ष्यां द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनः।
देवायतनचैत्येषु सान्नभक्षाः सदक्षिणाः।
उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक्पृथक्।
दीर्घासिबद्धा योधाश्च संनद्धा मृष्टवाससः। [ 30 ]
महाराजाङ्गनं शूराः प्रविशन्तु महोदयम्।
एवं व्यादिश्य विप्रौ तौ क्रियास्तत्र विनिष्ठितौ।
चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च।

---

### 6

Ś1 D3–5.7 om. l. 1. —(l. 2) Ś1 D1.3–5.7 G1 तु; D2 [ऽ]पि (for च). M3 नर° (for जनघोषे). Dg1 Dt1 T1 G1 M2.3 जनाधिपः (for नराधिपः). —For l. 3, Ś1 D1–5.7 subst. :

प्रणम्य गुरुमासीनमित्युवाच पुरोहितम्।
[ D2 प्रत्युवाच (for इत्युवाच). ]

—(l. 4) D3 तत् (for यत्). Ś1 D4 सपरिच्छदः. —(l. 5) D2 अपि; D4.7 अस्य (for अद्य). T1.3 G3 M1 भगवान्. T1.3 अर्हति. —(l. 6) Dt1 मुनिसत्तमः; D5 भगवानृषिः. —(l. 7) Ś1 D4.7 राज्ञां (for राज्ञः). D3 मंत्रीन्; M2 यत्तान् (for युक्तान्). Ś1 D4.7 गणं युक्तं कृतांजलिं (for the post. half). —(l. 8) Ś1 D2.4.7 T3 बलिं; V1 B4 तथा; M3 बहिस् (for बलीन्). —D2 om. (hapl.) l. 9–10. —(l. 9) Ś1 V1 B4 D1.3–5.7 शुक्लं च माल्यं (D1 माल्यं च [by transp.]); T3 M2.3 °माल्यांश्च (for शुक्लमाल्यानि). Ś1 Dm1 D1.4.7 लाजाश् (for लाजांश्). D1 वृथं च; D3 पृथतं (for पृथक् च). —(l. 10) B4 D5 (before corr.) आहृतानि. Ś1 V1 B4 D1.3–5.7 G1 च (for [अ]पि). —(l. 11) Dd1 T3 G1 M2 चतुरंगं (for चतुरङ्ग-). Ś1 V1 B4 D1.2.4.5.7 सितवर्णं (Ś1 मितबलं; D1 शतवर्णं) च तुरगं (V1 B4 तुरगं च [by transp.]; D5 चतुर्दंतं) (for the prior half). —For l. 11, D3 subst. :

सन्ति च तुरगं चैव गजं च गुणसंयुतम्।

—(l. 12) V1 D2 G2 चामरे; M3 चारम- (by meta.) (for चामर-). B4 -व्यजन- (for -व्यजने). V1 G1 शुभ्रे; Dt1 चोमे; G2 ये* (for श्वेते). D1 ध्वजछत्रं. V1 B4 Dg1 T G M1–3 पांडरं (for पाण्डुरम्). —(l. 13) Ś1 V1 D1.2.4.5.7 -कौंभानां (for -कुम्भानां). V1 B4 घटानाम् (for second कुम्भानाम्). G1 अति- (for अग्नि-). —(l. 14) D3 हिरण्यं. B4 -सिंह; D3 G1 -शृंग- (for -शृङ्गं). Dt1 T1.3 G1.3 M2.3 ऋषभं (for वृषभं). —After l. 14, Dm1 ins. राम. —Dd1 Dm1 T G3 Cv transp. l. 15 and 16. ❀ Cv : यच्चान्यदिति अर्धमुपस्थापयतेत्यर्धात्परतो द्रष्टव्यः। पुरस्तात्तु लेखकैः प्रमादाल्लिखितम्। ❀ —(l. 15) V1 D3 [अ]न्यं (for [अ]न्यत्). Ś1 V1 B4 D1.2.4.5.7 तच्च सर्वमनूनं (V1 °लून; B4 °मूल) कं; D3 तच्च सत्कर्तुमर्हथ (for the post. half). —(l. 16) Ś1 उपस्थापय तत् (for °पयत). V1 B4 D1–3.5 (marg.).7 अग्न्यागारे; Dd1 T G M2 (*inf. lin.*).3 अग्न्य (T2 °ग्न्या) गारं. —(l. 18) D1–3.5 चंदनैः; D7 वंदनं; G2 चानंत- (for चन्दन-). G2 [आ]घ्राणहारिभिः. Ś1 D1–5.7 सुमनोदामभिस्तथा (for the post. half). —For l. 18, V1 B4 subst. :

अलंक्रियतां सर्वत्र विचित्रैर्माल्यतोरणैः।

—(l. 19) Ś1 D4.7 सर्वं प्रशस्तं; D1–3.5 प्रशस्तवत्तद् (D2.5 °वच्च) (for प्रशस्तमन्नं). Ś1 च गुणं; Dg1 गुडवद; T G1.2 M1.2 विधिवद्; G3 घृतवद् (for गुणवद्). Ś1 D1.2.7 -सेवनं; T2 -सेचितं (for -सेचनम्). D3 दधिक्षीरोदनं बहु (for the post. half). —M3 om. (hapl.) l. 20–23. —(l. 20) Dg1 T M2 -साहस्रे (M2 °स्रैर्). Ś1 D1–5.7 प्रकाम (Ś1 °मं) फलं (for °मलं). Ś1 D2.7 लभेत् (for भवेत्). —(l. 21) Ś1 सिद्धिमंत्राधिकं तावत्; D1–3.5 सिद्धमन्त्वा (D2 °त्रा; D5 °न्ना) हृतं ताव (D3 चान्य) त्; D4.7 सिद्धमन्त्रादिकं ताव (D4 तद्व) त् (for the prior half). Ś1 D1–5.7 प्रत्युषस्यैव (D5 °स्योप) कल्प (Ś1 D4 °ल्प्य) तां (for the post. half). —Ś1 D1–5.7 om. l. 22. —(l. 22) Dd1 Dm1 T2 G2.3 M1 च दधि (by transp.). Dg1 Dd1 Dm1 T3 G M1.2 लाजांश्. —(l. 23) Ś1 द्योतित-; D1 [ऽ]प्युदित-; D3 सूदित- (for ऽभ्युदित-). D1 हि; D5 [ऽ]स्य (for श्वो).

